चेत् । किमत्र सदसच्छब्दौ भावाभाववाचिनौ । किंवा विद्यमानाविद्यमानवाचिनौ । नाद्यः सिद्धसाधनत्वात् । भावात्मकस्य विश्वस्य भावान्तरवैलक्षण्याङ्गीकारेण भाववैलक्ष-ण्यात् । अभावस्य च अभावान्तरवैलक्षण्याङ्गीकारात् । यदि च प्रत्येकं भावाभाववैलक्षण्यं विवक्षितं । तथाप्युक्त एव दोषः भावात्मकस्य विश्वस्य भावान्तरवैलक्षण्याङ्गीकारात् । अभावादपि वैलक्षण्यांगीकारात् भावाभाववैलक्षण्यम् । एवम् अभावात्मकस्य विश्वस्य भावादभावान्तराच्च वैलक्षण्यमस्त्येव ।

भावाभाववैलक्षण्यं नाम तत्त्वानधिकरणत्वं विवक्षित-मिति चेत् । भावस्याभावत्वानधिकरणत्वं । अभावस्य च भावत्वानधिकरणत्वात्सिद्धसाधनं । प्रत्येकं भावत्वानधिकर-णत्वं विवक्षितमिति चेत् । तथापि भावस्य विश्वस्य भावत्वैकाश्रयत्वेन उभयधर्माश्रयत्वानंगीकारात् । अभावस्य चाभावत्वैकाधिकरणत्वादुभयरूपतानंगीकारात् ॥ ४ ॥

अथैकस्य वस्तुनो भावत्वानाधिकरणत्वराहित्यं साध्य-मिति चेन्न । भावस्य अभावत्वानधिकरणस्याभावस्य भावत्वानधिकरणत्वर्वात्सिद्धत्वादंशे सिद्धसाधनत्वं उभयसाधना-ददोष इति चेत्, न, न हि असिद्धसंनिधानेन सिद्धम-सिद्धं भवति । विशिष्टसाधनेनैवमिति चेन्न । तथापि वैयर्थ्यानिस्तारात् ॥ ५ ॥

अथ भावाभिमते भावत्वानधिकरणत्वं अभावाभिमते चाभावत्वानधिकरणत्वं साध्यत इति चेन्न । अनेकेषां भावत्वानामङ्गीकृतत्वात्तदनुगतस्य चानंगीकारात् । तथा चान्यगतभावत्वस्य भावान्तरेऽभावात् सिद्धसाधनमेव । एवमभावेप्यभावत्वान्तरस्याभावात्सिद्धमेव ॥ ६ ॥

अथ भावाभावाभिमतयोः सर्वथा भावाभावत्वेनस्त इत्यर्थो विवक्षितः, अत्र वक्तव्यं, यदि प्रागभावादिकं पक्षीकृत्याभावत्वानधिकरणत्वं साध्यते । तदा तस्य भावत्वं प्रतिज्ञातं स्यात् । भावस्यैवाभावत्वानधिकरणनियमात् । द्वौ नञौ हि प्रकृतमर्थं सातिशयं गमयतः । एवं वियदादिकं पक्षीकृत्य भावत्वानधिकरणत्वे साध्यमाने तस्याभावत्वं प्रतिज्ञातं स्यात् । अभावस्यैव भावत्वानधिकरणत्वनियमात् । भावनिषेध एव ह्यभावः, तथा च विश्वस्य भावविभागस्य च परेणाभ्युपगतत्वात् । न ममानिष्टं किंचित्, किंतु भावाभावव्यतिकरमात्रम् । तत्साधनं च प्रकृतानुपयुक्तमिति ॥ ७ ॥

भावाभावाभिमतयोरभावभावत्वानधिकरणत्वे वादिप्रतिवादिसंमते भावाभावत्वानधिकरणत्वमप्यधिकं साध्यते । इति चेन्न । प्रमितपरित्यागायोगात् । साधनीयस्य प्रमाणबाधितत्वात् ॥ ८ ॥

द्वितीयेप्युत्तरमूहनीयम् ॥

किंच, न सत्वं नामैकमनुगतं, किंतु प्रतिवस्तु सत्वानि भिद्यन्ते । तत्र वियदादेरसद्वैलक्षण्ये सति सत्वानधिकरणत्वं, साध्यमानं किमेकसत्वानधिकरणत्वं, उतानेकसत्वानधिकरणत्वं, अथ सर्वसत्वानधिकरणत्वं, किंवाऽविशेषितसत्वानधिकरणत्वं, अथवा सर्वथा सत्वानधिकरणत्वं विवक्षिततम् ।

नाद्यः विश्वस्य सतोऽपि सत्वान्तराधिकरणत्वाङ्गीकारात् । अत एव न चतुर्थः । न द्वितीयतृतीयौ, भेदवादिनैकैकस्यार्थस्यानेकसर्वसत्त्वस्वीकारात् । न पंचमः, सदसत्वापत्त्या सिद्धसाधनत्वात् । मया ह्येकस्यैव सदसत्वमङ्गीकृतं, स्वोपाधौ प्रतिषेधाप्रतियोगित्वात् । परोपाधौ च तत्प्रतियोगित्वात् । द्वयोरपि सर्वथा प्रतिषेधात्कथं सदसत्वप्रसंग इति चेन्न । व्याहतत्वात्प्रतिज्ञायाः प्रपंचस्य सदसद्विलक्षणासिद्धिः । अस्मादेव हेतोस्तत्सिद्धिर्भविष्यतीति चेत्, तर्हि माता वंध्येति प्रतिज्ञा कुतो विप्रतिषिद्धा । वक्ष्यमाणहेतुनैव प्रतिज्ञार्थसिद्धेः तत्रापि सुवचत्वात् । संभावितप्रतिज्ञाया अर्थः साध्येत हेतुनेति न्यायात् । तत्र हेत्वाकांक्षैव नास्तीति चेत्, समं प्रकृतेऽपि ।

किं च सत्वानाधारत्वप्रतिज्ञासाक्षिप्रत्यक्षबाधिता । साक्षिणा विश्वस्य सत्वग्रहणात् । अन्यसत्वानधिकरणत्वे साध्ये सतां भेदः सिद्धः । अनेकसत्वनिषेधे एकस्य सत्वस्य

स्वतः सिद्धेश्च । सत्येवानेकानि सन्ति पारमार्थिकत्वेकमेवेति चेन्न । तत्सिद्धयर्थमेवाद्यापि भवता प्रयतनात् । चतुर्थे दूषणान्तरमाह । यतस्त्वया ब्रह्मण्यपि विवक्षितविशेषं सत्वमंगीक्रियते । अतस्तदनधिकरणत्वस्य साधने सिद्धसाधनं स्यात् । ब्रह्मगतसत्वस्य प्रपञ्चेऽनंगीकारात् । सत्साधने अर्थांतरतेति ॥

किमिदं सत्वं नाम यदनधिकरणत्वं विश्वस्य साध्यते किं सामान्यसत्वं, उतस्वरूपसत्वं आद्येऽपि किं सामान्यसत्तामङ्गीकृत्य तदनधिकरणत्वं साध्यते, अनंगीकृत्य वा । आद्ये सतां भेदसिद्धिः । द्वितीये तदनधिकरणप्रतिज्ञा व्यर्था स्यात् । येनेदं शशविषाणाधिकरणवत् । न द्वितीयः सतां भेदसिद्धिः । नह्येकाश्रयं सामान्यमस्ति । द्वितीयं दूषयति । स्वरूपसत्वं यतोंऽगीकृतं ब्रह्मणस्तद्वैलक्षण्यं अब्रह्मत्वमपि विश्वस्य नो भवेदिति । अथवा सामान्यसत्तापक्षे दोषान्तरमनेनोच्यते । तथा हि सत्तासामान्यविधुरस्याऽपि ब्रह्मणः स्वरूपसत्वं तावदस्ति । न पुनः सत्ताविधुर्यात् ।

असदनिर्वाच्यं वा ब्रह्म । तस्मात्सत्ताविधुर्यस्यासत्वाद्यहेतुत्वात् । तत्सत्तानधिकरणत्वसाधनं नानिष्टं । अर्थक्रियाकारित्वं, ज्ञानाबाध्यत्वं, वा सत्वमिति पक्षद्वयं स्फुटदोषत्वात्रादूषितम् । अर्थक्रियावैधुर्यसाधने हि बाधः स्फुट

एव । परमार्थतो नास्तीत्यप्युक्तोत्तरं सत्यस्य नार्थक्रियेति वदता मिथ्याभूतस्यैवार्थक्रियाकारित्वमंगीक्रियतेति सिद्धांतविरोधश्च । अर्थक्रियाविधुरस्याऽपि ब्रह्मणः सत्वात्तद्वैधुर्यं नासत्त्वादिहेतुः । अर्थक्रियानधिकरणमात्रसाधनं प्रकृतानुपयुक्तं तद्विरुद्धं च । ज्ञानाबाध्यत्ववैधुर्यं च तद्बाध्यत्वमेव । तच्च हेत्वर्थाऽभिधयत इति साध्याऽविशिष्टता ।

यस्त्वया सच्छब्दार्थतया अंगीकृतः स एवास्माकमित्यतीवमन्दम् । माया हि क्वचित् सदिति भावो व्यवन्हीयते । क्वचिच्च प्रतिपन्नोपाधौ निषेधाऽप्रतियोगि । क्वापिऽ मूर्तमित्यादि तत्सर्वं च निरस्तमिति ।

हेतुमपाकरोति । तथा हि - ज्ञानबाध्यत्वं हि ज्ञाननिवर्त्यत्वं वा, प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं वा, हेतुत्वेन परस्याभिमतम् । न च प्रतिवादिनो मम सिद्धम् । अतो अन्यतराऽसिद्धो हेतुः ।

अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिर्बाधः इति हि तन्मतम् । न चाऽयं प्रपंचे अस्माकं संमतः । किन्तु मुद्गरप्रहारादिना घटस्येव ईश्वरज्ञानेच्छाप्रयत्नव्यापारैः विनाश एव । स एव हेतुरस्तु इति चेन्न । तथाविधमपि ज्ञानबाध्यत्वं पक्षैकदेशे प्रकृत्यादौ न सिद्धं प्रतिवादिन इति भागासिद्धत्वात् ।

किंच सत्यस्यस्याऽपि ज्ञानविनाश्यत्वे बाधकाभावात् । अप्रयोजकत्वं हेतोः । अतो व्याप्यत्वाऽसिद्धिः । सतो विनाशे चैतन्यस्याऽपि विनाशप्रसंग इति चेत् । तर्हि विनाशमात्रस्य साध्यप्रयोजकत्वेन ज्ञानबाध्यत्वं व्यर्थविशेषणासिद्धमपि स्यात्। सत्वसाम्येपि विनाशिकारणसदसद्भावेन विशेषोपपत्तेश्च ।

अस्मद्रीत्याऽन्यथाविज्ञानस्य सम्यग्विज्ञानत्वं चेदात्मनि- व्यभिचारः । शुक्तिरजतादेरनिर्वचनीयत्वं प्रतिवादिनो ममाऽपि सिद्धम् । मयाऽसत्वेनांगीकृतत्वात् । अत एव ज्ञानबाध्यत्वं ममतत्रासंमतम् । तद्विज्ञाननिवर्त्यत्वं परस्याभिमतम् । न चासस्तत्संभवति ।

तस्य नित्यनिवृत्तत्वात् । अतः साध्यसाधनविकलोऽयं दृष्टान्ताभासः ।

केचिन्नेदं रजतमितिह्यध्यस्तवस्त्वभा बोधे बाधमाहुः ॥ अपरेतु शुक्तिरियमिति विरोधिभावान्तरज्ञानम् । तदुभयं प्रत्येकमव्यापकं शब्दादौ द्वयोरपि बाधत्वप्रसिद्धेः ॥ तस्मा- दुभयानुगतं लक्षणमुच्यते – अन्यथाविज्ञातस्य सम्यग्विज्ञानं बाध्यत इति ।

रजतत्वादिनाविज्ञातस्य पुरोवर्तिनः शुक्तित्वादिना विज्ञानं खल्वन्यथाविज्ञातस्य सम्यग्विज्ञानम् । एवं असतोऽरजतस्य

सत्त्वादिनाऽवगतस्य सत्वादिनाविज्ञानमप्यन्यथाविज्ञातस्य सम्यग्विज्ञानम् ।

सम्यग्विज्ञानं बाधः इत्येवोक्ते अतिप्रसंगः । तन्निवृत्यर्थं अन्यथा ज्ञातस्येत्युक्तं ।

अन्यथाविज्ञातस्य ज्ञानमित्येवोक्ते धारावाहिकविभ्रमे रजतत्वेनावगतस्य शुक्तिशकलस्य पुनर्नागवंगत्वादिज्ञानेऽपि प्रसंगः तन्निरासाय सम्यगित्युक्तम् ।

अन्यथेति । तत्स्वरूपापेक्षया – । तेन पट घपेक्षया अन्यथा – घटत्वेन, विज्ञातस्य पुनर्घटत्वेन ज्ञाने प्रसंगो-निरस्तः ! छलप्रसंगात् ॥

तथापि रजतत्वेनावगतस्य शुक्तिकाशकलस्य शुक्लत्वादि ज्ञाने प्रसंगस्तदवस्थः एवमेकेनान्यथाविज्ञातस्य पुरुषान्तर-संबंधिनि तस्यैव वा पुरुषस्य कालान्तरभाविन्याज्ञानसिद्धे सम्यग्विज्ञानेपीति चेन्मैवम् । बाधतिः खलु लोडने पठ्यते । तच्च ज्ञानस्यार्थस्यवास्तु । न तावत् ज्ञानस्य । तस्य क्षणिकत्वेन स्वत एव लोडितत्वात् । सम्यग्ज्ञानस्यापि, उत्तरज्ञानविनाश्यस्य बाधितत्वव्यवहारप्रसंगात् । नाप्यर्थस्य । शुक्तिशकलादेस्तादवस्थ्यात् । रजतादेः नित्यलोडित-त्वात् ।

अतः पूर्वज्ञानप्रसंजितस्यान्यथाकारस्य लोडनमिवेति वक्तव्यम् । तथा च सति कोऽतिप्रसंगः । कथमनुच्यमानं ज्ञाप्यते अन्यथाविज्ञातस्येतिवचनसामर्थ्यात् ।

किमिदमनिर्वचनीयत्वम् । किं निरुक्तिविरहः । किंव निरुक्तिनिमित्तविरहः ॥

नाद्यः । अनिर्वचनीयमित्यादिनिरुक्ते सत्वेनासंभवित्वात् । द्वितीयेऽपि निरुक्तिनिमित्तं ज्ञानं अर्थो वा स्यात् । नाद्यः, ज्ञानस्योभयवादिसिद्धिसद्भावात् । न द्वितीयः । यथा प्रतिभासमर्थस्य रजतादेः मायावादिना अंगीकृतत्वात् ।

अथ सदसद्विलक्षणत्वं अनिर्वचनीयमिति चेन्न । निराकृतत्वात् । तत्र यावत्सु पक्षेषु सिद्धार्थपर्यवसानं तावत्सु अविर्वचनीयस्य सत्वाविरोधित्वेन न सन्प्रपञ्चः किन्त्वनिर्वचनीयइत्यारम्भासंगतिर्दोषोऽवगन्तव्यः । यत्र पुनर्बाधादिपर्यवसानं तत्राव्याप्तिरवगन्तव्या ।

किञ्चासम्भवीदं लक्षणं उभयवैलक्षण्यस्य कुत्राप्यप्रमितत्वात् । सदसद्विलक्षणमनिर्वचनीयमित्युक्ते ब्रह्मण्यतिव्याप्तं, तस्यासद्विलक्षणत्वात् । न धर्मकत्वे सत्वानधिकरणत्वाच्च ॥ अतो ब्रह्मणः सत्वं न सिद्ध्यति । किं चानिर्वाच्यत्वं स्यात् । सत्वेनासत्वेन विचारासहत्वमनिर्वचनीयत्वम् ।

न पुनः सत्वासत्वधर्माधिकरणत्वम् । ब्रह्मतस्तु सत्वेन विचारसहं कथमनिर्वचनीयं स्यात् ॥ मैवम् । सत्वेनेति त्वत्प्रत्ययार्थस्यानभ्युपगमात् ॥

ज्ञानबाध्यत्वमनिर्वचनीयत्वमिति चेन्न । वियदादेः सत्वेन शुक्तिरजतादेरसत्वेनाविद्योपादानकत्वाभावात् ।

यदि पुनर्ज्ञानविनाश्यत्वमात्रं लक्षणं । तथापि वियदादौ नित्ये नित्यत्वादेव शुक्तिरजतादौ चासत्वान्नासिद्ध-मित्यव्याप्तिः ।

यदि च प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं तदपि वियदादौ न सिद्धमित्यव्याप्तिरेव ।

अत्रान्यथाविज्ञानमेव भ्रांतिः । तत्प्रसंजितान्यथाथार-लोडनं सम्यग्विज्ञानमेव बाधः ॥

इह खलु केचिद्यथार्थं सर्वविज्ञानमितिमन्यमाना अन्यथाख्यातिं न सहन्ते । तथाहि । केयमन्यथाख्याति-र्नाम ॥

यदि तावदन्यथापरिणते वस्तुनि ख्यातिरन्यथाख्यातिः । तदा घटादिप्रत्ययाः सर्वेऽप्यन्यथाख्यातित्वाद्विभ्रमाः प्रसज्येरन् ।

किं च शुक्तिकायाः रजताकारपरिणामः किं सकारणः उताकारणः ।

न तावदकारणः ॥ कादाचित्कत्वानुपपत्तेः । आद्ये कारणं वाच्यम् । करणदोष इति चेन्न । तस्य करणसंबंधिनः शुक्तिकापरिणामहेतुत्वानुपपत्तेः ॥ अन्यथा तदेव सकलार्थानां रजतरूपपरिणामप्रसंगात् ।

दुष्टकारणसंसर्गो हेतुरिति चेत्तथापि शक्तित्वावगमेन रजतरूपपरिणामः किं वा तदनपगमेन । आद्ये पुरुषान्तरेणापि तदा शुक्तित्वं न प्रत्येतव्यम् । द्वितीये भ्रान्तेनापि तत्प्रत्येतव्यम् । किं च शुक्तित्वापगमे बाधेऽपि न तद्भायात् ।

अथ पुनः शुक्त्याकारेण रजतं परिणतमिति चेन्न । करणदोषस्य कारणस्याभावात् । बाधोप्येवं भ्रमः स्यात् । अपि चैतत् समस्तप्रतिपत्तृसाधारणमपि कुतो न भवेत् ।

यत्करणपरिणतं तेनैव गृह्यत इति चेन्न, घटादेरपि कुलालादिमात्रवेद्यतापातात् । सुखादिवदिति चेन्न । बाह्यान्तरत्वेन विशेषात् । अन्यथोक्तातिप्रसंगानिस्तारात् ।

किं च दोषवशाद्रजताकारेण परिणताचेच्छुक्तिः, तदा

दोषापगमेपि तथैव कथं नावतिष्ठते । न हि निमित्तकारणनाशात्कार्यनाशो दृष्टः ।

कमलकुड्मलविकासनिमित्तमत्वेन असंभवित्वात्, सावित्रतेजोपगमस्य विकासनिवृत्तिहेतुना च दृष्टेति चेत्, मैवम्, दलविभागो हि विकासो नाम, स च क्षणिकत्वात्सत्येव तेजसि निवृत्तसंयोगप्रध्वंसस्तु न कदापि निवर्तते ।

पुनःसंयोगलक्षणो मुकुलीभावस्तु शीतादिनोदनजन्य एव । स्थायित्वेपि विभागस्यान्यदेव तन्नाशे निमित्तमिति यत्किंचिदेतत् ।

यथा ऐहिकबुध्युपरमे परत्वादि व्यवहारनाशः तद्वदत्रापि स्यात् । इति चेन्नविप्रतिपत्तेः । किं चोत्पन्नं चेद्रजतं विनष्टं तदा तथैव प्रतीतिः स्यात् । न पुनर्नेदं रजतमिति बाधबुद्धिः । एतेन दुष्टकरणजन्याद्विज्ञानाद्रजतजन्मेत्यपि परास्तत् ।

का चैवं सति दोषवाचो युक्तिः । नहि मृदो घटाकारपरिणामस्य निमित्तं दंडं चक्रादिकं दोषत्वेन मन्यन्ते ॥

किं च यस्याः प्रतीतेस्तदालंबनं तत एव तज्जन्म किंवा प्रतीत्यंतरात् । नाद्यः । परस्पराश्रयप्रसंगात् । उत्पन्ने हि रजते तदालंबनायाः प्रतीतेर्जन्म तस्यां जातायां रजतोत्पत्तिरिति । न खलु निरालंबना प्रतीतिरुत्पद्यते ।

द्वितीयेऽपि किं तत्प्रतीत्यंतरं शुक्तिकालंबनं । उत शुक्तिकारजतांतरालंबनम् । अथवा अर्थांतरालंबनं । नाद्यः शुक्तिप्रतीत्यनंतरं रजतोत्पादप्रसंगात् । शुक्तिकारजतप्रतीतेः प्राक् शुक्तिरेवेति प्रतीतिनियमाभावाच्च ।

दुष्टकरणालोचित शुक्तिसाधारणाकारप्रतीते रजतजन्येति चेन्न । साधारणाकारदर्शनानन्तरं रजतप्रतीतिनियमाभावात् । कारणवैकल्यं तत्र कल्प्यत इति चेत् । स्यादेतदेवम् । यदि रजतजन्मप्रतीतं स्यात् । प्रतीतिं तु प्रकारांतरेण उपपादयिष्यामः ।

न द्वितीयः पूर्वरजतस्यापि तदेव कारणमिति रजतप्रतीतिप्रवाहाविच्छेदप्रसंगात् ।

तृतीयेतिप्रसंगाच्च ।

तदेवं भ्रांतिबाधयोरनुपपत्तेर्न परिणामपक्षो युक्तः ।

नापि वस्तुनो वस्त्वंतरात्मनावभासोऽन्यथाख्यातिरिति। तथा हि। किं वस्तुनो वस्त्वंतरात्मता सती उतासती॥

आद्ये न भ्रांतिर्नापि बाधः। सर्वेषां च सर्वं सर्वात्मना प्रतीयेत। (अन्यात्मनः(स्य) सत्वात्)

न हि दोषः कारणसंस्कारः। तथात्यदुष्टकरणेन न किंचिदुपलभ्येत।

न द्वितीयः। असतः प्रतीत्यनुपपत्तेः। उपपत्तौ वा किं रजतस्यापि स्वरूपेणान्यत्र सत्वग्रहणेन। तेनासंबद्ध-विशेषणविशिष्टप्रतीतिरन्यथाख्यातिः निरस्तम्। असतो विशेषणसंबंधस्य प्रतीत्यनुपपत्तेः। उपपत्तौ वा किमसत्ख्यातिवादिभिरपराद्धम्।

अथ रूपे अन्याकारं ज्ञानं अन्यथाख्यातिरिति। तदसत्। समीचीनज्ञानस्याप्यांतरबाह्यत्वादिनाऽर्थविलक्षणा-कारत्वेन विभ्रमत्वापत्तेः॥

अन्याकारोल्लेखिज्ञानमन्यालंबनमन्यथाख्यातिरिति तु विरुद्धम्। तथा हि। किमिदमालंबनं सत्वम्। उत कारणत्वं विषयतया कारणत्वम्। सर्वप्रत्ययानां सर्वार्थालं-बनत्वापत्तेः। सर्वज्ञता चैवं सति स्यात्। अतीतादि-

विषयस्य निरालंबनतापातश्च ।।

अत एव न द्वितीयतृतीयः । रूपादिज्ञानस्य चक्षुराद्यपि कारणमिति तदालंबनत्वप्रसंगात् । अतीतानागतविषयत्वं च ज्ञानस्य न स्यात् । अतीतानागतयोरसत्वेन कारणत्वानुपपत्तेः ।

अत एव न चतुर्थः । आत्माश्रयं चैवं सति स्यात् । विषयत्वस्यैव निरूप्यमाणत्वात् ।

किं चेदं विषयत्वं येन यस्यातिशय उत्पद्यते स तस्य विषय इति चेन्न । अतिशयोहि ज्ञातता वा स्याद्व्यवहारो वा । नाद्यः । अनभ्युपगमात् । अभ्युपगमेप्यतीतादिज्ञानस्य निर्विषयत्वापातात् । न ह्यसति धर्मिणिधर्मोत्पादो युज्यते । न द्वितीयः । अतदर्थिनो व्यवहारानुत्पत्तावविषयत्वानुपपत्तेः । व्याघ्रचोरादिज्ञानानन्तरमादीयमानस्य दंडादेरपि तद्विषयत्वप्रसक्तेश्च ।

यद्विज्ञानं यदाकारं तत्तदालंबनमिति तु तथामतमनुधावति ।

यत्सन्निकृष्टकरणेन यत् ज्ञानं जन्यते तत्तद्विषयमित्यपि न । रूपादिज्ञानस्याकाशादिविषयतापातात् । चक्षुराकाशसन्नि-

कर्षस्यापरिहार्यत्वात् । तत्तादृशस्य प्रत्यभिज्ञाविषयत्वं च न स्यात् । तत्राकाशसन्निकृष्टकरणेन जन्यत्वात् ।

तस्य वाक्यस्य वाक्यार्थेन संन्निकर्षाभावात् । तज्जनितज्ञानस्य वाक्यार्थो विषयः स्यात् । आकाशविषयत्वं चापद्यते ।

लिंगज्ञाना चात्मसन्निकृष्टाज्जायमानं लिंगिज्ञानं आत्मविषयमापद्येत । तस्माद्यज्ज्ञानं यत्प्रतिभासं तदेव तस्यालंबनमिति मन्तव्यम् ।

तत्र रजतज्ञाने शुक्तिरवभासते नवेति वक्तव्यम् ।

अवभासत इति ब्रुवाणः श्लाघनीयप्रज्ञो देवानां प्रियः ।

यदि संविदिवहुमानवान्नेति ब्रूयात्तदा तच्छुक्तिकालंबनं स्यात् । किं च रजतमवभासते शुक्तिकालंबनं स्यात् । किं च रजतमवभासते शुक्तिकालंबनं चेत्यतिप्रसंगः कथं परिहरणीयः ।

न चान्यथाख्यातिजनने कारणं पश्यामः ।

न च चक्षुरादिकमेवकारणं । तस्य समीचीन ज्ञान कारणतावधारणात् । तादृशस्यादृष्टभेदाद्भिन्नकार्यजनकत्वमस्त्विति

चेन्न कार्यभेदे निश्चिते तथा कल्प्यत्वात् । न च वक्तव्यं दावदहनदग्धवेऽत्रबीजानां कदलीकांडजननं प्रति सामर्थ्य-मुपलब्धमिति । पाकेन द्रव्यांतरोत्पत्तेः तेषां वेत्रबीजत्वाप-गमात् । किं च क्वचिद्‌ज्ञानस्य प्रदर्शिताकारव्यभिचारे कथं अन्यत्राश्वासः ।

ननु यथा घटादेः पार्थिवत्वस्य व्यभिचारेऽपि न धूमस्यापि तद्व्यभिचारः शक्यते । वैषम्यात् । घटादेर्धूमस्य पार्थिवत्वाविशेषेऽपि धूमत्वादिरेवावांतरो विशेषो व्यभिचार-निश्चयोपायोऽस्ति । न हि तत्र बाधकं किंचित् । तेनोपपद्यते तत्राश्वासः । प्रकृते तु न ज्ञानत्वावांतरविशेषे मनः आश्वासनिरसनक्षममीक्षामहे ।

न च बाधकभावाभावरूपाद्विशेषाद्व्यवस्थेति वाच्यम् । बाधकस्यापि ज्ञानत्वेन शंकास्पदत्वात् । बाधकाभावश्चानुपसंजा-तबाधभ्रमे समानः ।

संवादभावाभावाभ्यां विशेष इति चेन्न । उक्तोत्तरत्वात् । संवादकमपि हि ज्ञानमेवेति तदपि कथं संशयास्पदं न स्यात् । तत्रापि संवादकांतरान्वेषणेऽनवस्था कुतो न भवेत् । अंगीकृतश्च परेण धारावाहिकविभ्रमेऽन्योन्यसंवादः ।

एतेन ज्ञानजन्यव्यवहारविसंवादाविसंवादलक्षणोऽपि विशेषः

परास्तो वेदितव्यः । तद्विशेषग्राहिण्यपि विश्वासकारणाभावात् ।

अपि च प्रतीयमानोयं रजताकारः कुतस्थ इति वक्तव्यम् । न तावत्पुरोवर्तिनिष्ठ इतीष्टमन्यथाख्यातिवादिनाम् । बाधक-विरोधश्च तथा सति स्यात् । नापि देशांतरवर्तीति वक्ष्यामः । ततश्च ज्ञानस्थ इत्येवापतितम् । तथा च जितं साकार-विज्ञानवादिभिर्बौद्धैः ।

ननु तर्हि इदं रजतमित्यादिप्रत्ययस्य का गतिः । उच्यते । रजतमिति द्वे ज्ञाने स्मृत्यनुभवरूपे । तत्रेदमिति पुरोवर्तिद्रव्यमात्रग्रहणम् । दोषवशात्तद्गतस्य शुक्तित्वसामान्य-स्याग्रहणात् । तन्मात्रं च गृहीतं सदृशतया संस्कारोद्बोध-क्रमेण रजतस्मृतिं जनयति । सा च गृहीतग्रहणस्वभावापि दोषवशात् गृहीततत्तांशप्रमोषेण गृहीतसरूपावतिष्ठते । तथा च रजतस्मृतेः पुरोवर्तिग्रहणस्य च मिथः स्वरूपतो विषयतश्च भेदाग्रहणात् सन्निहितरजतज्ञानसारूप्येणेदं रजतमिति मिथ्यापि ग्रहणस्मरणे अभेदव्यवहारं समानाधिकरणव्यपदेशं च प्रवर्तयतः कुत एतदिति चेत् । अन्यथानुपपत्तेरुक्तत्वात् ॥

किं चेदमिति तावत्पुरोवर्तिन्यसंप्रयोगजं ज्ञानमनु-भव इत्यविशदम् रजतज्ञानं च न तावदिन्द्रियजम् इन्द्रियस्य सन्निकृष्टार्थ एव ज्ञानजननसामर्थ्यात् अन्यथा सर्वेषां सर्वसंवेदनप्रसंगात् न च विप्रकृष्टेन रजतेन सन्निकर्षोऽस्ति

न च शुक्तिशकलसन्निकर्षादेवेंद्रियं रजतज्ञानमुत्पादयतीती सांप्रतम् । अतिप्रसंगात् । न च दोषसदसद्भावाभ्यां व्यवस्था । दोषाणां विपरीतकार्यकारितया निरस्तत्वात् ।

भस्मकदोषदूषितस्य जठरजातवेदसो बहुतराहारपरिणामे हेतुतोपलभ्यत इति चेन्न । विप्रतिपत्तेः । दोषस्यैवाहार-विकारहेतुत्वोपपत्तेः ।

न च दहनकार्यं कथं दोषः करोतीति वाच्यम् । कार्येपि वैजात्योपलंभात् । जठराग्निपरिणता हि रसाः । शरीरोपचयहेतवो न भस्मकपरिणतास्तथा । तस्मान्नेदमि-न्द्रियजम् ।

न च लिंगाद्यनुसंधानरहितेनापि जायमानमनुमानादि-प्रभवमिति शक्यते वक्तुम् । अनन्यथासिद्धनियतपूर्वक्षणभावि-कारणाभावेप्युत्पद्यमानमिदं स्मरणमेव ।

तथा च प्रयोगः । इदं स्मरणमनाकलितरजतस्यानु-त्पद्यमानत्वात् । संप्रतिपन्नस्मरणवत् । न चेदमस्मरणम् । तत्तांशविकलत्वात्संप्रतिपन्नवदिति युक्तम् । पदात्तदर्थस्मृतौ हरिहरादिस्मृतौ च व्यभिचारात् ।

किं चानुभूतं तावन्न समस्तं स्मर्यते । तत्तांशश्चा-

तीतदेशकालसंबंधः स्मर्यमाणधर्मः । तथा च स्मरणं भवतु । भवतु दोषवशात् प्रमुषिततत्तांशम् । न च विपक्षे बाधकं किंचिदित्यप्रयोजको हेतुः ।

न च नेयं स्मृतिः इन्द्रियजन्यत्वात् । संप्रतिपन्नवत् । विमतं इन्द्रियजन्यं इन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वादिति वाच्यम् । स्मृतिबीजसंस्कारोद्बोधहेतुपुरोवर्तिसाधारणाकारग्रहण एवेंद्रियव्यापारान्वयव्यतिरेकयोरुपक्षीणत्वात् ।

नन्वेवं सत्यनास्वादिततिक्तस्य शिशोः तिक्तस्मरणानुपपत्तेः कथं तिक्तो गुडप्रत्यय इति चेत् । तज्जन्मांतरानुभूतत्वात् । न हि सर्वेषां शिशूनां तथाप्रसंगः । अदृष्टानियमात् । क्वचित् ग्रहणे एव मिथोऽगृहीतभेदे । यथा पीतः शंखः इति । अत्र विनिर्यन्नयनरश्मिवर्तिनः पीतद्रव्यस्य पीतत्वं दोषवशात् द्रव्यरहितं गृह्यते । शंखोपि गुणहीनः । स्वरूपमात्रेण गृह्यते । तदनयोर्गुणगुणिनोरितरेतरसापेक्षिणोरसंसर्गाग्रहात्सारूप्यात् पीतचिरबिल्वादिफलप्रत्ययाविशेषेणाभेदव्यवहारः समानाधिकरणव्यपदेशश्च भवतः । क्वचित् पुनः स्मरण एवागृहीतविवेके । यथा सघटः तत्रासीदिति । अनयैव दिशाऽज्ञातचक्रादि व्यवहाराः सर्वेपि निर्वाह्याः ।

किं च विपर्ययमंगीकुर्वाणेनापि विवेकाग्रहो ग्राह्य

एव । न हि विवेकग्रहे विपर्ययावकाशो अस्ति । विरोधात् अन्यथा विपर्ययनिवृत्त्यनुपपत्तेः । तथा च तत एव सर्व-स्योपपत्तौ किं विपर्ययकल्पनया ।

न चान्यथाख्यातौ किमपि प्रमाणमस्ति । भेदाग्रह प्रसंजिता भेदव्यवहारबाधनेनैव नेदमितिविवेकज्ञानस्य बाधक-त्वमप्युपपद्यते । तदुदपत्तौ चागृहीतविवेकस्य ज्ञानद्वयस्या-भ्रांतित्वमपि लोकसिद्धम् ॥ तथाच प्रयोगः । विगीतप्रत्ययो यथार्थः । प्रत्ययत्वात् संप्रतिपन्नवत् ॥

नन्वत्र विगीतप्रत्ययो नाम किं पुरोवर्ति निर्विकल्प-कज्ञानं उत सदृश दर्शनोत्थं रजतस्मरणम् । किंचोभयं । अहोस्विद्रजतपुरोवर्त्यैकताज्ञानं । आहोस्वित् प्रमुषितभेदं वेदनद्वयम् । तत्राद्यपक्षत्रयेऽसिद्धसाध्यता । चतुर्थेत्वाद्याश्रया सिद्धत्वं अपसिद्धांतो व्याघातश्च ॥ पंचमे प्रतिवाद्याश्रया-सिद्धतेति चेत् । मैवम् ।

अस्ति तावत्पुरोवर्ति निर्विकल्पकज्ञानम् । अस्ति च सदृशपुरोवर्तिदर्शनजनितारजतस्मृतिः । तथास्त्येव च तत्समुत्थं सविकल्पकमिदमिति वेदनात्सविवादभेदाभेदं रजतवेदनम् ॥ तत्र विप्रतिपन्नौ भेदाभेदौ विहायेदं रजतमित्यवगममात्रमिदं रजतमित्यादि समानावगममात्रमिदं रजतमित्यादि सामानाधि-करण्यव्यवहारकारणं पक्षत्वेनविवक्षितं चेत्को विरोधः । न

हि विप्रतिपन्नाकारेणैव पक्षीकारः क्वचित् । मा हि भून्नित्यानित्याग्निमदनग्निमच्छब्दपर्वतपक्षीकारे प्रकृतदोषानुषंगात् भंगोनुमानमुद्रायाः ।

किं च सिद्धस्यैव पक्षीकरणम् । विमताकारस्यापि पक्षत्वे किं साध्येत । विमतौ च भेदौ विभ्रमगोचरविचारावसरे । भेदे हि वेदनयोरिदं वेदनं पुरोवर्तिमात्रगोचरम् । न रजतवार्तां वेत्ति । रजतवेदनमपि रजतमात्रग्राहि यस्यकस्यचिद्रजतत्वमनुसंधत्ते । तच्च प्रमाणविरुद्धमिति क्वान्यथाख्यातिः । अतस्तद्वादिभिरभेद एव वक्तव्योऽप्यकर्तव्यश्चाख्यातिवादिभिरित्यस्त्येव विप्रतिपत्तिः ।

ततो विप्रतिपन्नाकारं परित्यज्येदं रजतमित्यवगममात्रपक्षीकारे न कश्चिद्दोषः । कथमन्यथाख्यातिवादीदं रजतमिति ज्ञानस्य पुरोवर्तिविषयत्वसाधनाय साधनमुपन्यस्यन्नितो दोषात् विमुच्येत ।

अथ रजतार्थिनः शुक्तिकायां प्रवृत्तौ हेतुभूतं ज्ञानं मया पक्षीक्रियत इति चेत् मोच्चैर्वोचः परोपि श्रोष्यति ।

प्रवृत्तिहेतुभूतेन ईश्वरज्ञानेन सिद्धसाधनता स्यादिति चेत् । तत्रापि बाधः कथं न स्यात् ।

प्रकृतप्रवृत्तिहेतुरनीश्वरज्ञानं पक्षीक्रियते इति चेत् । ममापि तथैव स्यात् ।

त्वयेश्वरानभ्युपगमात् । व्यर्थं विशेषणमितिचेत् । तर्हि मां प्रति तवापि कथं न व्यर्थम् ।

इदं ज्ञानादगृहीतविवेकं रजतज्ञानमिति विप्रतिपत्तिविषयमुद्धाटयामीति चेत् सममेतन्ममापि ।

किं च विवादाध्यासितं रजतज्ञानं रजतविषयं रजतज्ञानत्वात् सम्मतवत् । अत्रापि पूर्ववद्विमतविषयो विवेचनीयः ॥

स्यादेतत् किमिदं रजतज्ञानं नाम रजतस्य ज्ञानं रजतज्ञानम् । रजतं तज्ज्ञानं चेति वा । रजतशब्दोल्लेखिज्ञानं वा रजतार्थिनः प्रवृत्तिहेतुज्ञानं वा ॥

न प्रथमः ॥ षष्ठ्यर्थस्य विषयविषयिभावव्यतिरेकेणासंभवात् साध्याविशिष्टत्वात् ॥ न द्वितीयः उभयासिद्धेः ज्ञानस्य निराकारत्वात् । तृतीयेपि किं रजतशब्दविषयत्वं वा ॥ नाद्यः । असिद्धेः न द्वितीयः । पूर्वपदज्ञानेनापि रजतपदस्मरणसंभवेन तत्र व्यभिचारात् । न चतुर्थः । विवेकाग्रहवादिनां इदमितिज्ञानस्यापि शुक्तिकालंबनस्य तद्धेतु

त्वेन व्यभिचारात् । मैवम् ।

अन्यथाख्यातित्वादिना रजतज्ञानं शुक्तिविषयमन्यथाख्यातिरिति वक्तव्यम् । तत्र रजतज्ञानशब्देन योर्थः परेण विवक्ष्यते स एवास्मकं हेतुर्भविष्यति ।

तथा हि न तावदाद्यः कल्पः परेणांगीकर्तुमुचितः व्याघातप्रसंगात् । शुक्तिरजतयोरभेदप्रसंगाच्च । न द्वितीयः। अनभ्युपगमात् । न तृतीयः । शुक्तिकाज्ञानस्याप्यन्यथा-संकेतितरजतशब्दस्मृतिहेतुत्वसंभवेनान्यथाख्यातित्वप्रसंगात् । नापि चतुर्थः । यत्र शुक्तिकातदध्यस्ताद्रजतमस्तीतिवाक्यं श्रुतवतः शुक्तिज्ञानमपि रजतार्थिनः प्रवृत्तिहेतुर्भवतीति तस्यापि अन्यथाख्यातित्वप्रसंगात् ।

केचित्पुनारजतविषयं ज्ञानमित्येव हेत्वर्थमुपगम्य रजतान्तरविषयत्वसाध्यमंगीकृत्य साध्याविशिष्टतादोषं परिहरन्ति । तदसत् । रजतघटाविति ज्ञाने व्यभिचारात् । अन्यतरासिद्धेश्च । तस्मादुक्त एव परिहारः ।

अपि च ज्ञानत्वं यथार्थमात्रवृत्ति । ज्ञानमात्रवृत्तित्वात् प्रमात्ववत् । शुक्तिका न रजतत्वेन अवभासते यथा मेरुः सर्षपत्वेन । इदं रजततादात्म्यं न प्रत्येतुं शक्यं असत्वात् ।

तस्मादख्यातिपक्ष एव श्रेयान् इति ।

अत्रोच्यते । अन्यदन्यात्मना विषयीकुर्वज्ज्ञानं अन्यथाख्यातिः इत्यंगीकारात् नोक्तदोषावकाशः ।

ननु अन्यस्य अन्यात्मता सती उता सती । असतीति ब्रूमः । असतो न प्रतीतेः इति चेन्न । तस्या उपपादयिष्यमाणत्वात् ।

अत्र केन चित् अख्यातिवादिना प्रलपितम् —

यथा इदं रजतमितिज्ञानं भ्रमः, तथा खंडो गौः, शुक्लः पटः । इत्यादयः सर्वे एव सविकल्पकप्रत्ययाः विभ्रमाः प्रसज्येरन् । समानाधिकरणस्य तादात्म्यालंबनत्वात् । तस्य चात्राभावादिति । तदतीव मन्दम् ।

तथा हि, सामानाधिकरण्यप्रत्ययो हि कयोस्तादात्म्यमवलम्बते । किं गुणक्रिया जात्यादेः द्रव्येण । उत गुणानामेव परस्परं, अथ गुणाश्रयस्य क्रियाश्रयेणेत्यादि ।

नाद्यः, असंमतेः, न हि शुक्लः पट इत्यस्य शौक्ल्यं पट इत्यर्थो अभिमतो लौकिकानाम् । न च चलति पट इत्यस्य चलनं पट इत्यर्थोऽभिमतः । नापि खण्डो गौरित्यत्र खण्डत्वगोत्वयोः पिण्डैक्यं संगतम् । तथात्वे दण्डी देवदत्तः

इत्यस्यापि दंड देवदत्ततादात्म्यविषयतापत्तेः ।

दण्डो इत्यत्र भेदज्ञापकः प्रत्ययोस्तीति चेत् शुक्लः पट इत्यत्रापि अर्शआदिभ्योजित्यकारप्रत्ययविधानात् ।

चलतीत्यादौ तु स्फुट एव प्रकृतिप्रत्यययोः अर्थभेदः ।

अत एव न द्वितीयः । न हि शुक्लः पटश्चलतीत्यस्य शौक्ल्यं पटत्वं चलनञ्च एकमित्यर्थः चेतसि चकास्ति प्रतिपत्तॄणाम् । तथा सति दण्डी कुण्डली देवदत्त इत्यस्यापि ज्ञानस्य दण्डकुण्डलदेवदत्ततादात्म्यविषयतापातात् ।

तृतीयस्तु स्यादेव । समानं एकं अधिकरणम् । एषां भावः सामानाधिकरण्यम् ।

न चाश्रयभेदे तस्य समानता अस्ति । विशिष्टयोः गुणक्रियाश्रययोः भेदेऽपि न विशिष्टस्य गुणाधिकरणत्वं किन्तु तदाश्रयता निश्चितस्य वस्त्वंतरस्य ।

यत्सन्निकृष्टकरणेन यज्ज्ञानं उत्पद्यते स तस्य विषय इत्यंगीकारात् । संनिकर्षस्यापि ज्ञानकारणतया विवक्षितत्वेन तस्यासंबद्धत्वात् ।

न हि चक्षुरादेः आकाशादिना संनिकर्षो रूपादि ज्ञानकारणम् । किं नाम, असौ अवर्जनीय संनिधिरेव । कथं तर्हि वाय्वादिना संनिकर्ष उच्यते ।

संसर्गधर्मकपदार्थवाचि पदसमुच्चयरूपवाक्यविषयताज्ञानेन वाक्यार्थज्ञानं जन्यते । तद्व्याप्यलिङ्गविषयेण च लिङ्गज्ञानेन लिङ्गिज्ञानमुत्पद्यते । तदनुभवजनितसंस्कारजन्या इन्द्रियेण प्रत्यभिज्ञा जायते । इति नातिप्रसङ्गः ।

न हि संयोगादिरेव संनिकर्षः । किं नाम प्रत्यासत्तिमात्रम् । तथापि आत्मसंनिकृष्टमनसा रूपज्ञानं जायते इति तस्यात्मविषयः स्यादिति चेन्न । असाधारणकारणस्य विवक्षितत्वात् । मनसश्च साधारणत्वात् ।

तर्हि मनःसन्निकृष्टेन चक्षुषा जायमानं रूपज्ञानं मनोविषयमापन्नमिति चेत् न । संनिकर्षस्यापि असाधारण-कारणतया विवक्षितत्वात् । चक्षुर्मनः संनिकर्षो हि द्रव्यादि-ज्ञानसाधारणः ।

एवं जन्यज्ञाने विषयत्वस्य अन्यथाव्यवस्थितत्वात् ; यद्यदज्ञानं यत्प्रतिभासं इत्यन्यथा परिभाषणं अनुपपन्नम् ।

न चैवं सत्यनुभवविरोधः । रजतावभासस्य शुक्तिका-

सन्निकृष्टकरणजन्यत्वेन तद्विषयत्वोपपत्तेः ।

न चातिप्रसंगः दोषजन्यत्वतदभावादिना व्यवस्थोपपत्तेः अन्यथा रजतज्ञानात् अरजते प्रवृत्तावपि कथं नातिप्रसंगः ।

अस्तु वा यद्विज्ञानं यत्प्रतिभासं तत्तद्विषयं इत्येव व्यवस्था । तथापि नानुभवविरोधः ।

शुक्तिरजताभासस्य शुक्तित्वविषयतायां अनुभवविरोधं ब्रूषे उत इदन्ताकारस्य ।

आद्ये संप्रतिपत्तिः । न हि वयं अस्मिन्प्रत्यये शुक्तिर्नावभासत इति ब्रूमः येन विरोधः स्यात् । शुक्तित्वप्रतिभासस्य रजतावभासविवादभावात् ।

द्वितीये तु न कश्चिद्विरोधः । विरोधे वा समीचीने रजते इदं रजतमिति प्रतीतिर्न स्यात् ।

एवं सति रजतस्यापि ज्ञानविषयता प्रसज्यत इति चेत् । सत्यम् । इष्टमेवैतत् ।

न चैवम्, अन्यथाख्यातिपक्षपातः ज्ञानैक्याभ्युपगमात् ।

नापि शुक्तिरजतमितिज्ञानं विभ्रमः प्रसज्यते, रजतस्य

असत्वाभ्युपगमात् । तादात्म्यावभासस्य अभ्युपगमाच्च ।

न चान्यथाख्यातिजनने कारणाभावः । इन्द्रियादेरेव तत्कारणत्वात् । समीचीनज्ञानकारणस्यापि दोषकलुषितस्य विभ्रमहेतुत्वोपपत्तेः ।

न च दोषाणां स्वारसिकशक्तिविरोधतामात्रमितिवाच्यम् । तथा सति समीचीनव्यवहारहेतोर्विज्ञानादन्यथाव्यवहारजन्यानुपपत्तिप्रसंगात् ।

किं च सहकारिमात्रस्य विपरीतशक्त्याधायकत्वं दोषाणामेव वा ।

आद्ये पशुहिंसा किं धर्मजनने स्वारसिकशक्तिमती उत अधर्मजनने इति वाच्यम् । आद्ये कथं क्रतुनाद्यापि धर्मं न जनयेत् । द्वितीये कथं क्रत्वन्तर्गताऽपि धर्मं जनयेत् । सहकारिवशादिति चेत् । अङ्गीकृतं तर्हि सहकारिणा स्वारसिकशक्तिप्रतिरोधेन विपरीतशक्त्याधायकत्वम् ।

न द्वितीयः । नियामकाभावात् ।

किञ्च, काचादयोऽपि विपरीतज्ञानजनने सहकारिण एव अंगीक्रियन्ते, दोषत्वं तु इष्टकार्यविघातितामात्रेण उच्यते कामुकस्य कामिनीविभ्रमेषु गुणत्वाभिमानात् ।

न चैवं भर्जिताः कुटजधानाः वटांकुरं कुतो न जनयन्तीति वाच्यं, पदार्थशक्तिवैचित्र्यात् ।

केचित् वस्त्वंतरशक्तिमेव प्रतिबघ्नन्ति यथा भर्जनादयः ।

केचित् सहजशक्तिप्रतिबन्धेन विपरीतामपि शक्तिमादधति । यथा विषस्य मारकत्वशक्तिं प्रतिबध्य आरोग्यादिजननशक्तिमादधानाः पदार्थाः ।

गुणा एव न ते दोषाः इति चेत् । काचादयोऽपि गुणा एव न ते दोषाः इत्युक्तमेव ।

ननु जनकस्यैव साक्षात्कारिप्रत्ययविषयत्वं दृष्टम् । न च रजतस्येदं न तादात्म्यस्य वा मनो जनकत्वं अस्ति । तत्कथं विषयत्वमिति चेत् । मैवम् । तथा सति ईश्वरज्ञानस्य नित्यस्य अर्थो विषयो न स्यात् । प्रत्यभिज्ञानस्य च तदंशो विषयो न भवेत् ।

तत्र निरूपकत्वादिनात्रेण विषयतांगीकारे रजतादेरपि ज्ञाननिरूपकत्वेन विषयत्वोपपत्तेः. कथं, असतो निरूपकत्वमिति चेत् न । गुरूणां टीका, कुरूणां क्षेत्रं इति ह्युपपत्तेः अतीतादिविषयानुमित्यादि व्यावर्तकत्वं च प्रमेयस्य न स्यात् ।

तत्र व्यावर्तकं कदाचिदस्ति रजतादिकं कदापि नास्तीति वैषम्यमिति चेत् । तत्किं यदाकदाचित् सतः कारणत्वं, पूर्वक्षणे सतो वा, नाद्यः । अतिप्रसंगात् । द्वितीये तु किमनेन ।

अथ न अतीतादिरर्थः स्वसामर्थ्येन अनुमित्यादिकं तु व्यावर्तयति; येन तत्सत्तापेक्षा न स्यात्; किन्तु करणजन्यं ज्ञानमर्थं व्यावर्तुमेव जायते, करणजन्यादेवेति चेत् समं प्रकृतेऽपि ।

किञ्च सत्यस्थलेऽपि न साक्षात् साक्षात्कारं प्रति कारणत्वं अर्थस्य किन्तु इन्द्रियसंनिकर्षस्यैव । स च यत्र सतानोपपद्यते तत्र अर्थसत्तामपेक्षते इति पारम्पर्येणैव अर्थस्य कारणत्वम् ।

ननु तर्हि असता रजतादिना संनिकर्षायोगात् कथं इन्द्रियेण तज्ज्ञानजन्मेति चेन्न । शुक्तिकासंनिकृष्टं दुष्टमिन्द्रियं तामेव अत्यन्तसद्रजतात्मना अवगाहमानं ज्ञानं जनयतीत्यंगीकारात् । अत एव न असत्ख्यातिप्रसंगः ।

यावत्खलु विगीते प्रत्यये भासते तस्य सर्वस्यासत्वे असत्ख्यातिः स्यात् ।

न चैवमित्युक्तम् । यच्चोक्तं विषयव्यभिचारे ज्ञानस्य सर्वत्रानाश्वास इति तदौत्सर्गिकम् । ज्ञानानां प्रामाण्यं अपवादाद्विपर्ययः इति वदताआचार्येणैव परिहरिष्यते । साक्षी खलु चैतन्यरूपो नियतपर्यायः, कदाचिदपि शंकमानः शंकितोन्तःकरणवृत्तीनां याथार्थ्यं स्वयमेव गृण्हाति । परीक्षा सहकृतस्तु अयाथार्थ्यमिति बादरायणीयं मतम् ।

अत एव अनाश्वासनिरसनोपायो न ज्ञानेषु कश्चिद्विशेषोऽस्तीति तिरस्तम् । अन्यथा परस्यापि कथं विषयव्यभिचारे व्यवहृतेः व्यवहारान्तरे समाश्वासः स्यात् । तदभावे च कथं व्यवहारदर्शनेन अन्वितार्थे व्युत्पत्तिः ।

क्वचित् विवेकाग्रहे च कथमन्यत्र विशिष्टप्रत्यये विश्वासो भवेत् । तदभावे च कथं निःशंकाप्रवृत्तिः । बाधकाभावादिना समाश्वासस्तु परोक्तरीत्यैव निरस्तः । कि च प्रवृत्युत्तरकालीनो बाधकाभावः कथंनिःशंकप्रवृत्तौ उपयुज्यते ।

बाधकाभावादिना विशिष्टज्ञानस्वरूपनिश्चयं अंगीकुर्वाणः कथं स्वप्रकाशविज्ञानवादं न जह्यात् । औत्सर्गिकी प्रवृत्तिः अपवादान्निवृत्तिरिति चेत् । समं प्रकृतेऽपि ।

यदप्युक्तम् विपरीतख्यातिपक्षे ज्ञानं साकारमापतेदिति तदप्यनुपपन्नं, अत्यन्ता सत एवाकारस्य स्फुरणांगीकारात् ।

अन्यथा व्यवह्रियमाणस्याकारस्य बहिरभावात् व्यवहारोऽपि तदाकारः प्रसज्येत । यस्तु रजतज्ञानस्य स्मृतित्वे परिशेषोपन्यासः सोऽपि प्रत्युत्पन्नकरणदुष्टेंद्रियादि जन्यतोपपादनात् परिशेषानुपपत्तेरयुक्तः ।

अनाकलितरजतस्यानुत्पद्यमानत्वं च गगनादौ अनैकान्तिकम् । रजतज्ञानवत एव उत्पद्यमानत्वं विवक्षितमिति चेन्न । तथापि रजतसंस्कारव्यवहारादौ व्यभिचारात् ।

ज्ञानत्वे सतीतिविशेषणादयमदोष इति चेन्न । रजतनिर्विकल्पकज्ञानवत एव उत्पद्यमाने रजतसविकल्पकानुभवे व्यभिचार तादवस्थ्यात् ।

रजतसविकल्पकज्ञानवत एव उत्पद्यमानज्ञानत्वं विवक्षितमितिचेन्न हानादिबुद्धिष्वनैकान्तिकताऽनिस्तारात् ।

संस्कारमात्रसहकृतमनोजन्यत्वोपाधिग्रस्तंचानुमानम् ।

न चानेनैव हेतुना, अस्य पक्षे साधनं, व्यभिचारस्योक्तत्वात् । किञ्चेदं स्मरणत्वं साध्यं, न तावत्सामान्यं गुणेषु प्राभाकरैरभ्युपगतम् ।

अनुभवत्वमिति चेत् । तदपि किमनुभवादन्यत्वं, अनुभवत्वानधिकरणत्वं वा । आद्ये अनुभवस्यापि तत्संभवेन

सिद्धसाधनना स्यात्, द्वितीये अनुभवत्वं किमिति वाच्यम्? स्मृत्यन्यत्वमिति चेन्न । स्मृतावपि प्रसंगात् । इतरेतराश्रयप्रसक्तेश्च ।

ज्ञानसंस्कारमात्रप्रभवत्वं स्मृतित्वमिति चेन्न । मानसप्रत्यक्षजःस्मृतिरित्यस्माभिरंगीकृतत्वेन पक्षस्य अप्रसिद्धविशेषणत्वात् ।

दृष्टांतस्य साध्यवैकल्याच्च । किञ्च इन्द्रियव्यापारान्वयव्यतिरेकानुविधायीदं रजतज्ञानं तत्कार्यमित्यसीयते ।

तथा च बाधितविषयत्वम् । अन्वयव्यतिरेकयोः अन्यत्र उपयोगात् नैवमिति चेत्, न किमस्य स्मृतित्वे सिद्धेऽन्यत्रोपक्षयः कल्प्यते, उत, एवमेव । नाद्यः, तदभावात् अस्मादेवानुमानात्तत्सिद्धौ अन्योन्याश्रयप्रसंगात् । न द्वितीयः, समीचीनरजतप्रत्ययेऽपि तथात्वप्रसंगात् । अन्यत्रोपक्षयः शंक्यत इति चेन्न । तथापि संदिग्धकालातीतानिस्तारात् । समीचीनरजतानुभवेऽपि कथमन्यत्रानुपक्षयो निश्चितो भवता ।

अननुभवत्वनिश्चयादिति चेन्न । इन्द्रियव्यापारस्यान्यत्रोपयोगशंकया अनुभवत्वस्यापि सन्दिग्धत्वात् । पुरोवर्तिव्यवहारसंवादादनुभवत्वसिद्धिरिति चेन्न । संवादानुभवस्याप्यनि-

श्रितत्वात् । असति बाधके न वृथा अन्यत्रोपायः शंक्यत इति चेत् । समं प्रकृतेऽपीति ।

एतेनाप्रत्युत्पन्नकारणप्रभवत्वं स्मृतित्वमित्यपि परास्तम् । संस्कारोत्पत्त्यनन्तरमेव जातायां स्मृतौ अनैकान्तिकत्वं च ।

अनुभूतविषयत्वं स्मृतित्वमिति चेन्न । द्वितीयादिभ्रमे सिद्धसाधनत्वात्, साध्याविशिष्टताप्रसंगाच्च ।

तत्तांशोल्लेखित्वं स्मृतित्वमिति चेन्न । अनुभवबाधितत्वात् । एतेन ज्ञानसंभिन्नार्थगोचरत्वमित्यपि परास्तम् ।

अनेनैव प्रतिपक्षानुमानद्वयमपि समाहितं वेदितव्यम् । नेदं स्मृतिरिति व्यवहर्तव्यम् । तत्रोल्लेखादिस्मृतिचिह्नविकलत्वादिति प्रथमप्रयोगे विवक्षितत्वात् । अत एव तिक्तगुडादिप्रत्ययप्रक्रियापि परास्ता ।

अन्यथाख्यातौ किं प्रमाणमिति चेत् अनुभव एवेति ब्रूमः ।

तथाहि पुरोवर्तिनि रजते रजतमिदमिति विशिष्टविषयमेकमेव विज्ञानं स्वप्रकाशतया वा मानसप्रत्यक्षेण वा साक्षिणा वा अवभासते ।

तथा इदमपीति कुतोऽस्य न विशिष्टविषयैकज्ञानत्वम् । न हि ततोऽस्य मात्रयापि विशेषं पश्यामः । दर्शने वा अस्मत्प्रवृत्तिर्न स्यात् ।

इयांस्तु विशेषः । एकं तादृग्विषयसद्भावात् यथार्थं तदभावात् अपरमयथार्थम् । अविशिष्टविषयमनेकमपि ज्ञानं विशिष्टविषयैकज्ञानत्वेन प्रतिभासते इति चेन्न । अन्यस्यापि विशिष्टविषयैकत्वे समाश्वासासंभवप्रसंगात् ।

विपर्ययांगीकारप्रसक्तेश्च ।

नास्त्येव विशिष्टविषयैकत्वग्राहि प्रत्ययः इति चेन्न ।

अनुभवसिद्धज्ञानापलापे, स्मृत्यनुभवस्वरूपापलापप्रसंगात् किं च रजतार्थिनः शुक्तिकायां प्रवृत्तिः अन्यथा अनुपपन्ना अन्यथाज्ञानमक्षिपति ।

नन्वियं प्रवृत्तिः स्वरूपतोविषयतश्च अगृहीतभेदात् वेदनद्वयादुपपद्यते । इति चेत् । कोयं भेदो नाम, किं स्वरूपं, उत पृथक्त्वं, उत अन्योन्याभावः, अथवा वैधर्म्यं न प्रथमः, स्वप्रकाशज्ञानज्ञेयप्रतिभासे तदनवभासानुपपत्तेः । न द्वितीयः । गुणे गुणानभ्युपगमात् । तृतीये वक्तव्यं किं इदं रजतत्वयोः अन्योन्याभावो नावभासते उत इदं

रजतयोरिति । नाद्यः, अपर्यायशब्दस्मारकयोः जातिव्यक्तोः तदनवभासासंभवात् ।

किञ्च अन्योन्याभावो नाम अन्योन्यस्वरूपमेव परस्य । तच्चोपलब्धमिति कथं तदनुपलंभः । अत एव न द्वितीयः । नापि चतुर्थः ।

रजतासंभाविनः पुरोवर्तिनि इदं त्वस्य पुरोवर्त्यसंभविनश्च रजने रजतत्वस्य गृहीतत्वात् । इदं रजतत्वयोः असंसर्गाग्रहो विवक्षित इति चेन्न ।

असंसर्गो हि संसर्गस्याभावः, स च इदं रजतत्वयो स्वरूपमेव परेषामिति कथं तदवभासेन अवभासेत ।

विपर्ययाभ्युपगमवादिभिरपि भेदाग्रहो अभ्युपगमनीय एव ।

तत्रापि किं भेदः स्वरूपमित्याद्युक्तदोषः समान इति चेन्न । भेदस्य स्वरूपतावन्मात्रत्वानभ्युपगमात् । अथ मन्यसे पुरोवर्तिनो यः, शुक्तित्वादि धर्मो रजतव्यावर्तको, यश्च रजते व्यवहितदेशत्वादिधर्मः पुरोवर्तिव्यावर्तकः तयोरग्रहणं प्रवर्तकमिति । तदसत् ।

पुरोवर्तिशुक्तित्वाग्रहे शुक्तिकार्थी न तत्र प्रवर्तेत रजतस्य च सन्निहितत्वादिधर्माग्रहे रजतार्थी न तत्र प्रवर्तताम् ।

रजतार्थिनः पुरोवर्तिनि प्रवृत्तिस्तु कुतः ।

किं च भेदाग्रहादन्यार्थिनोऽन्यत्र प्रवृत्तिं आचक्षाणः प्रष्टव्यः ।

किं अयमेव व्यवहारो भेदाग्रहादन्यस्त्वभेदग्रहात् उत सर्वोपि भेदग्रहादिति । नाद्यः । अनियतकारणतापातात् ।

ननु च अर्थभेदग्रह एव सर्वत्र प्रवर्तकः । तत्सारूप्यात् भेदाग्रहोपीति चेन्न । अनियतहेतुकत्वानिस्तारात् ।

अन्यथा कृशानुसदृशात् गुञ्जापुञ्जात् तच्छीतनिवृत्तिप्रसंगात् ।

अपि चेदं ज्ञानद्वयं प्रवर्तकसादृव्यमात्रात् यदि प्रवृत्तिं उपजनयेत्, निवृत्तिमपि कुतो न जनयेत् । अस्ति हि तत्र निवर्तकभेदग्रहसारूप्यं अभेदाग्रहणम् ।

ननु च यथा भेदाग्रहो भवतां, अभेदग्रहं जनयति तथा प्रवृत्तिमपि किं न जनयेदिति । मैवम् । वैषम्यात् ।

ज्ञानजनने हि कारणानां स्वातन्त्र्यं न पुरुषस्य प्रवृत्तिजनने । तानि च यादृश सामग्रीमध्यपतितानि तादृशं

ज्ञानं उपजनयन्ति । न तु पुरुषाकांक्षां अपेक्षन्ते । हेयोपेक्षणीयज्ञानजननात् । प्रवृत्तौ तु पुरुष एव स्वतन्त्रो न ज्ञानम् । स हि सत्यपि ज्ञाने अपेक्षित एव प्रवर्तते । न तु ज्ञानं जातमित्येवोदासीनविपरीतयोरपि ।

तथा च भेदाग्रहदोषकलुषितानि नयनादीनि विपर्ययं जनयन्ति ।

नापि सर्वोऽपि व्यवहारो भेदाग्रहात्प्रवर्तते इति सांप्रतं कुत्रापि विशिष्टज्ञानाभावप्रसंगात् ।

किञ्च, एवं सति सविकल्पकप्रत्यक्षोच्छेदप्रसंगः । असंसर्गाग्रहस्य वस्तुमात्रग्रहस्य च निर्विकल्पकज्ञानसाम्यात् । अतः संसर्गग्रहादेव सविकल्पकोपपत्तिः । न च निर्विकल्पकस्य प्रवर्तकत्वमस्ति ।

प्रतिभासमानयोः जातिव्यक्तोः असंसर्गाग्रहे सति संसर्गग्रहोऽवर्जनीयसंनिधिः इति चेन्न । उक्तविपर्ययस्यापि वक्तुं शक्यत्वात् ।

अवश्यञ्चैतदेवम् । व्यवहारो हि व्यवहर्तव्योपलम्भनिमित्तोयुक्तो न तु व्यवहरणीयानुपलब्धिनिबन्धनः ।

नहि घटव्यवहारो घटनतिमतिक्रम्य तद्विपर्ययप्रतिभासे सति भवति ।

तदमीप्रयोगाः । विमतोव्यवहारः व्यवहर्तव्यज्ञानपुरःसरः व्यवहारत्वात् घटव्यवहारवत् ।

विवादपदं रजतज्ञानं, इदं ज्ञानान्नभिद्यते । प्रकाशमानत्वतो अप्रकाशमानभेदत्वे सति प्रकाशमानत्वात् संप्रतिपन्नरजतज्ञानवदित्यादयः ।

किं च विपर्ययाभावे नेदं रजतमिति विवादपदं ज्ञानं – पुरोवर्तिविषयं, तद्विषयव्यवहारजनकत्वात् संमतवत् पुरोवर्ती वा, रजतज्ञानगोचरः, रजतानुपायत्वे सति तदर्थिप्रवृत्तिविषयत्वात् सम्यग्रजतवत् ।

ज्ञानस्य बाधकत्वमनुपपद्यमानं तं गमयति । न हि तथात्वे बाधकमस्ति । न तावदग्रहणनिवर्तकतया बाधकत्वं सर्वप्रत्ययानां तथात्वापातात् । तेषामपि प्रागभावनिवर्तकत्वात् । नापि व्यवहारविच्छेदकत्वेनातदर्थिनां व्यवहारानुपपत्तौ नेदं रजतमिति ज्ञानस्य बाधकत्वप्रसंगात् । व्याघ्रचोरादिज्ञानस्यापि प्रवृत्तिविच्छेदकत्वेन बाधकत्वप्रसक्तेश्च । न चार्थस्य व्यवहारयोग्यताविनाशकत्वेन समयांतरेऽपि तत्र विभ्रमात् प्रवृत्त्यभावापत्तेः ।

न च व्यवहारप्रतिबंधकत्वेनाविवेकनिवृत्तौ कारणाभावादेवव्यवहारानुत्पत्तेः ।। प्रतिबंधककल्पनायोगात् । व्याघ्रादिदर्शनस्य बाधतापत्तेश्च ।

विमतं अयथार्थं बाध्यत्वात् व्यवहारवत् । अत एव भ्रांतित्वप्रसिध्यापि विपर्यासप्रसिद्धिः । एवं सति प्रत्ययत्वानुमानं कालात्ययापदिष्टं वेदितव्यम् । अदुष्टकरणजन्यत्वोपाधिग्रस्तं च ।

एतेन रजतज्ञानत्वानुमानमपि निरस्तम् । अन्यथा विमतो व्यवहारः यथार्थः व्यवहारत्वात् संप्रतिपन्नवत् । रजतविषयो व्यवहारो यथार्थो भवितुमर्हति रजतव्यवहार-त्वादित्यपि स्यात् ।

यदपि ज्ञानत्वं यथार्थमात्रवृत्तीत्यादि । तत्र किमिदं ज्ञानत्वं सामान्यं वा प्रतिनियतं वा । नाद्यः । वादिप्रतिवादिनोराश्रयासिद्धेः । द्वितीये यथार्थज्ञानवृत्तिज्ञानत्वेषु सिद्धसाधनता ।

विमतज्ञानवृत्तिज्ञानत्वपक्षीकारेपि मात्रेति कथं स्यात् । तत्त्यागेन च प्रतिज्ञाने प्रथमानुमानदोष एव ।

किं च यथार्थमात्रवृत्तीत्ययथार्थावृत्तित्वमात्रं वा विवक्षितं

उतायथार्थज्ञानावृत्तित्वम् । आद्ये सिद्धसाधनम् । अयथार्थव्यवहारावृत्तित्वस्य सिद्धत्वात् ॥ द्वितीये परस्याप्रसिद्धविशेषणता । अदृष्टसामग्रीजन्यज्ञानावृत्तित्वमुपाधिश्च ।

यच्च शुक्तिकारजतत्वेन नावभासत इत्यादि । तदप्यसत् । मेरुसर्षप इत्यादिवाक्यान्मेरोरपि सर्षपत्वेन प्रतिभासात् । दृष्टांतस्य साध्यवैकल्यात् । अन्यथा तथाविधं वाक्याभासं श्रुतवता तत्प्रतिषेधो न क्रियेत । अप्रसक्तत्वात् ।

न हि पदार्थप्रतिषेधो युक्तः । यदपि इदं रजततादात्म्यमित्यादि । तच्चायुक्तम् । तदप्रतीतावाश्रयासिद्धेः । प्रतीतौ व्याघातात् । दृष्टांतस्य साध्यसमत्वाच्चेत्यास्तां विस्तरः ।

कश्चित् पुनरेवमाह । तासां त्रिवृतं त्रिवृतमेकैकामकरोदित्यादि श्रुतेः । समेत्यान्योन्यसंयोगमित्यादिपुराणात् त्र्यात्मकादित्यादिसूत्राच्च सर्वस्य सर्वात्मकत्वं च प्रतीयते ।

किं च सोमाभावे पूतीकाग्रहणं व्रीह्यभावे च नीवारग्रहणं च । अन्यथानुपपद्यमानं पूतीकनीवारयोः सोमव्रीह्यवयवसद्भावं गमयति ।

अपि च वस्तुनो वस्त्वंतरसादृश्यं प्रत्यक्षत एव प्रतीयते । न च तद्द्रव्यावयवयोगादन्यत्सादृश्यं नामास्ति ।

अतः शुक्तिकादिषु रजतादेः सद्भावाद्यथार्थएवायं रजत प्रत्ययः । निर्देशव्यवस्थार्थक्रियाव्यवस्था च भूयस्त्वादुपपद्यते । दोषवशादिंद्रियभूयांसमप्यंशं परित्यज्याल्पीयांसमंशं प्रकाशयतीति रजतार्थिनः तत्र प्रवृत्तिरपि युज्यते । अपगते तु दोषे भूयस त्वांशस्योपलंभे निवर्तते । बाध्यबाधकभावोऽपि ज्ञानयो रत एवोपपद्यते । पीतशंखादौ नयनवर्ति पित्त-द्रव्यसंभिन्ना नयनरश्मयः शंखादिभिः संयुज्यन्ते । ततः पित्तगतपीतिमाभिभूतः शंखगतशुक्लिमा न गृह्यते । अतः सुवर्णानुलिप्तशंखवत् पीतःशंख इति प्रतीयते । एवं स्वप्न-स्फटिकलौहित्यमरीचिकाजलादिप्रत्ययाः सर्वे यथार्था बोद्धव्या इति । तदिदमयुक्तम् । तथाहि नहि कारणसद्भावे कार्य-सद्भावो नियतो येनोपपत्त्यापीममर्थंप्रतीमः । तथात्वेवाशक्तौ रजतवत् सर्वस्यापि प्रतीतिः प्रसज्येत । अदृष्टादिवशान्नेव-मिति चेन्न । कार्यनिश्चयोत्तरकालीनत्वादस्या कल्पनायाः ।

श्रुत्यर्थापत्तिस्तु अत्यंतायुक्ता । तथा हि । पूतिकादौ किं सामान्यवयवाभूयांसः संतीति कल्प्यं, उत समाः, अथाल्पीयांसः । आद्येनोपपद्यत एवासौ । तत्कथमनुकल्प स्यात् । न हि सोमोपि केवलसोमः । किंतु सोमांशभू-यस्त्ववान् । न द्वितीयः । उभयदर्शनप्रसंगात् । तृतीये तत्कथं सोमकार्यं कुर्यात् । अन्यथा शुक्तिकापि कुतो रजतार्थक्रियां न कुर्यात् । श्रुतिप्रामाण्यात् तदर्थक्रियाकारिता

गम्यत इति चेत् । किं तर्हि सोमावयवसद्भावकल्पनया श्रुतिप्रामाण्यादेवात्यंतविविक्तानामेव वस्तूनामर्थक्रियासाम्यमुप-गम्यताम् । सादृश्यं च सामान्यं वा धर्मांतरं वो नान्योन्यावयवसंयोग इति वक्ष्यामः ।

किं च घृततैलयोः अन्योन्यसदृशयोः अन्योन्यावयव-संयोगात् अन्योन्यार्थक्रियया भाव्यम् । न भाव्यं च विसदृशयोः द्रव्ययोः । किं च मातृमातंगभदिराद्यतिसादृश्यं भार्यादिष्वस्तीति तदुपभोगे प्रत्यवायः स्यात् ।

अल्पावयवयोगान्नेवमिति चेत् कथं तर्हि नीवारात्रीहि कार्यं कुर्युः । श्रुतिप्रामाण्यादिति वदतो दत्तमुत्तरम् । अपरावयवसंयोग एव सादृश्यं चेत् कथं ककारखकारयोः सादृश्यमिति चिन्त्यम् ।

रजतार्थिनः शुक्तिकायां प्रवर्तकं च किं भूयसां शुक्त्यवयवानां अदर्शनं । उताल्पीयसां रजतावयवानां दर्शनं उतोभयम् । नाद्यः । सुप्तस्यापि प्रवृत्तिप्रसंगात् । द्वितीये किं तेषां अल्पीयस्त्वज्ञानं उत भूयस्त्वज्ञानं अथवा ज्ञानमतम् । आद्ये तस्या रजतत्वमेव विदितमिमिति कथं ततः प्रवृत्तिः । द्वितीये अन्यथाख्यातिप्रसंगः । तृतीये सदृशमात्रे प्रवृत्तिप्रसक्तिः । न तृतीयः । किमपि तत्रास्तीति ज्ञानादपि प्रवृत्तिप्रसंगात् ॥

कथं वाऽस्य ज्ञानस्य भ्रांतित्वम् । अल्पांशग्रहणादिति चेत् । नूनं ब्रह्मज्ञानमपि महाभ्रांतिप्रायं नाम । अत एव न बाधस्य बाधकत्वमपि । पित्तगतपीतिमालिप्तश्चेच्छंखः कथं तर्हि न तथा पार्श्वस्थेन गृह्यते । सूक्ष्मत्वादिति चेत् । किमिदं सूक्ष्मत्वं । अतींद्रियत्वं चेत् । न तर्हि भ्रांतेनापि दृश्येत । अन्यत्वे किमनेन ।

पित्तोपहतेन तु सामीप्याद्दृश्यत इति चेत् । किमिदं सामीप्यं नाम इन्द्रियसंनिकर्षश्चेत् । स तर्हि उभयोः समानः । शरीरसामीप्यं चेत् । अनुपयुक्तम् । अन्यथा परशरीरसमीपस्थानां दंडकुलादीनां अदर्शनप्रसंगात् । पीतः शंख इति प्रतीयत इति कोऽर्थः । किं पीतरूपवत्तयेति उत पीतरूपद्रव्यसंयुक्ततयेति । नाद्यः । अन्यथाख्यातिप्रसंगात् । द्वितीये अनुभवविरोधः ।

अन्यस्तु मन्यते गृह्यमाणयोर्भेदाग्राहिसविकल्पकमेकविज्ञानं विभ्रमम् । तथा हि । रजतसंस्कारदोषसचिवमिन्द्रियं शुक्तिशकलसन्निकृष्टं रजतशुक्तीदमंशविषयं तत्संसर्गासंसर्गानवगाहमानमेकमेव सविकल्पकं ज्ञानमुत्पादयति । तथा च तयोरेकविज्ञानोपारोहिणोर्भेदाग्रहादयथार्थव्यवहारः । तन्निरासादेव विवेकज्ञानं बाधकमित्युच्यते । न पुनरन्यदन्यात्मना प्रतीयत इति । तदिदमनुपपन्नम् । विवेकाग्रहः किं सर्वत्र

प्रवृत्तिहेतुः ! उतात्रैवेति । प्रागुक्तविकल्पदोषाणां अशेषाणां अविशेषात् ।

किं च प्राभाकराणां वेदप्रामाण्यसिध्यंगतया अस्त्याख्यातिस्वीकारे प्रयोजनमिति विद्यते भ्रमः । कारणभक्षाक्षचरणपक्षपातनायातस्मिंस्तदिति प्रत्ययोविपर्यय इत्यादि पूर्वाचार्यवचनमनादृत्य परमतप्रमोषः कस्मादिष्यते । असत्ख्यातिपरिहारार्थमिति चेन्न । तथासत्ययथाव्यवहारस्यापि परिहारप्रसंगात् । न ह्यसत्प्रत्येतुमशक्यं । शक्यं तु व्यवहर्तुरित्यत्र कारणविशेषोस्ति । व्यवहारः प्रतीतिसिद्ध इत्यलम् ।

ननु विपर्ययाभ्युपगमे कथं वेदप्रामाण्यसिद्धिः । वेदजनितप्रत्ययेपि विपर्ययाशंकाप्रसरादिति चेन्न । तथा सति भेदाग्रहस्याप्यनंगीकार्यतापातात् ।

तथा हि । न तावद्वेदवाक्यं पदार्थेषु प्रमाणम् । तेषां अन्यतोधिगतत्वात् । नापि संसर्गे विनापि संसर्गग्रहं असंसर्गाग्रहेणैव व्यवहारान् पश्यतो वेदजनितविज्ञानेपि शंकाप्रसरात् । अपौरुषेयत्वादिना सा निरसिष्यते चेत् किं तर्हि सकललोकावसितविपर्यासनिरासेन तच्छंकाया अपि अत एव निराकर्तुं शक्यत्वादिति ।

शुक्तिकैव रजततयाऽवभासत इति तावत्सिद्धम् ।

तत्रारोप्यमाणं रजतं सदेवेति केचिदातिष्ठन्ते । तथा हि । यद्धि यथावभासते तत्तथैवेत्यौत्सर्गिको न्यायः । अपवादस्तु बलवद्बाधकोपन्यासात् । तथा चेदं रजतं च तत्तादात्म्यं चेति त्रितयमिहावभासते । इदं, रजतत्वं च तत्संसर्गश्चेति वा । तत्र रजतत्वयोरिदमंशस्य च बाधाभावान्नासत्त्वमुपपद्यते । संवादसद्भावाच्च । तत्तादात्म्यस्य संसर्गस्य वा बाधकाद्विसंवादाच्चासत्त्वमस्तु । यथोक्तम् । असंभवे च यावत्तुतावदत्सं-परिहीयतामिति ।

नच नेदं रजतमिति बाधबोधो रजतस्याप्यसत्त्वमावेदयतीति वाच्यम् । तस्य तादात्म्यमात्रगोचरत्वेनोपपत्तौ रजतगोचरत्वकल्पनायां गौरवप्रसंगात् । यथाहुः । एकदेशापवादेन कल्प्यमाने तु बाधके । न सर्वबाधनं युक्तमिति न्यायविदः स्थिता इति ।

किं च रजतस्यात्यंतासत्त्वे प्रतिभासो नोपपद्यते । स्थिते चैवं सत्त्वे बाधसमये पुरोऽदर्शनाद्देशांतरसत्त्वमास्थीयते । दोषदूषितं चक्षुः शुक्तिकाशकलमात्रसन्निकृष्टमपि विप्रकृष्टरजतात्मना तद्दर्शयतीति को दोष इति । एतदप्ययुक्तम् । सत्त्वेति रजतस्यासदेव रजतं प्रत्यभादित्यनुभवविरोधात् । अत्रासत्त्वेऽपि अन्यत्र सत्त्वमंगीक्रियत इति चेन्न । अत्रप्रतीतस्यैवान्यत्रसत्त्वे मानाभावात् ।

तथा हि । भ्रांत्यनुभवो वा तत्र प्रमाणम् । बाधानुभवो वा भ्रांत्यनुपपत्तिर्बाधानुपपत्तिर्वा ।

नाद्यः । तस्य प्रमात्वात् । अत्रैव सत्तावेदकत्वाच्च ।

न द्वितीयः । तस्येदं रजतनिषेधान्मनोरन्यत्र सत्वासत्वयोरौदासीन्यात् ।

न तृतीयः । भ्रांतेः पुरोवर्ति इन्द्रियदोषादिभिर्विनानुपपद्यमानायास्तन्मात्राक्षेपहेतुत्वात् । असत्वे कथं प्रतीतिरिति चेत् । सत्वेपि कथम् ।

नह्यत्र सत्वमत्र प्रतीतेरुपकारि इन्द्रियसंनिकर्षार्थं वा तदाश्रेयं संस्कारसिद्धार्थं वा । नाद्यः । विप्रकृष्टेन सन्निकर्षाभावात् । पुरोवर्तिसंनिकर्षमात्रेणैव भ्रांतित्वांगीकारात् । न द्वितीयः । संस्कारो हि रजतानुभवमाक्षिपेत् । अनुभवश्च यथार्थो रजतसत्वम् । अत्र प्रतीतस्यैवान्यत्र सत्ता वा कुतः कल्प्या ।

किं च घटांतरे विनष्टोत्पत्स्यमानघटांतरतया यदा प्रत्येति । तदा कथम् । न हि विनष्टोत्पत्स्यमानयोरन्यत्र सत्तास्ति । कालान्तरेस्तीति चेन्न । सत्यं न तस्या भ्रांतावुपयोगं साक्षात्पश्यामः । संस्कारादिना हि तदुपयोगः ।

रजतांतरानुभवमात्रेणैव तद्भविष्यतीति व्यर्था तस्यैवान्यत्र सत्वकल्पना । एतेन प्रवृत्त्यनुपपत्तिरपि परास्ता ।

किं चासत्प्रतिभासासंभवे तादात्म्यमपि न प्रतिभासेत । तस्यात्राप्यभावात् । धर्मधर्मिभावस्तु वैधर्म्यमात्रम् ।

न चतुर्थः । बाधस्यान्यसत्तया विना नुपपत्त्यभावात् । अत्रैव रजतसत्त्वनिषेधानुपपत्त्यान्यत्र सत्वसिद्धिरिति चेन्न । तस्यात्रैव प्राप्तत्वेनोपपत्तेः ॥ एतेन यद्यथावभासते तत्तथैवेत्यादि परास्तम् । असदेवरजतं प्रत्यभादिति रजतासत्वप्रमाणस्योपन्यस्तत्वात् । तद्विषयसंकोचप्रमाणस्य च निरस्तत्वात् ।

किं सर्वत्रारोप्यमत्यंतासदेव उच्यते । यत्रारोप्यमधिष्ठानसंनिहितं तत्र तत्तादात्म्यमात्रमसत् । यथा दूरस्थयोः चूतपनसयोः एक एवायं चूत इति । बाधोत्तरकालमपि स्वरूपद्वयानुवृत्तेः । यत्र पुत्तरसन्निहितमारोप्यं तत्र तत्र तादात्म्यं चोभयमप्यसद् उक्तन्यायेनेति । तदेवं नैवंविधान्यथाख्यातिवादोप्यनुपपन्नः ।

अपरे पुनः रजतं सदेव किन्तु अंतरेवेति मन्यन्ते । तथा हि न तावदसदेवरजतम् । प्रतीत्यनुपपत्तेः । नापि पुरत एव सत् । भ्रांत्यनुपपत्तेः । बाधविरोधाच्च । न च देशांतरेसत् । प्रमाणाभावात् । अतः परिशेषात् ज्ञानाकार-

मेवावतिष्ठते ।

किं चेदं ज्ञानरूपं इन्द्रियसंप्रयोगेऽसत्यपरोक्षत्वात् ज्ञानवत् न च सत्यत्वे भ्रांत्यनुपपत्तिः । आंतरस्य बाह्यतयावभासो भ्रम इत्यंगीकारात् । तस्य नेदमिति बाह्यता निषेधेनैव बाधकस्य बाधकत्वोपपत्तेरिति । एतच्चानुपपन्नम् । सत्वेऽसदेव रजतमित्यसत्त्वावेदकप्रत्ययविरोधस्योक्तत्वात् ।

असतः प्रतीत्यनुपपत्तौ च बहिष्टताया अपि प्रतीत्यनुपपत्तिप्रसंगात् । तत्सत्वे भ्रांतित्वानुपपत्तेः । बहिःसत्वमेवासत्प्रत्ययेन प्रतिषिध्यत इति चेन्न । आंतरत्वे प्रमाणाभावात् । इन्द्रियसंप्रयोगमंतरेणा परोक्षत्वस्य हेतोः बाह्यतायामनैकांत्यात् । शुक्तिसंप्रयोगेणापरोक्षतायाः स्वीकारादसिद्धेश्च । दृष्टांतश्च साधनविकलः । ज्ञानस्यापि इन्द्रियसंयोगादेवापरोक्षतांगीकारात् ।

किं च गुंजापुंजादौ दहनादिसमारोपे तस्यातः सत्वे देहदाहादिप्रसंगः । अन्यथांतरमपि तदसदित्यंतासदेवापन्नमिति नात्मख्यातिपक्षोप्युपपत्तिमान् ।

अन्ये पुनः इदं रजतमिति प्रतीतिरसदालंबनैवेत्यास्थिताः तथा हि । न तावदिदं सदेव बाधबोध विरोधात् ।

नापि तदसत् । तत्रैव तदैव तस्यैव सदसत्वविरोधात् । देशकालप्रकारव्यवस्थाया सदसत्वांगीकारे घटादि तुल्यतापातात् । किं चैवं सति सदिदं रजतमिति ज्ञानं भ्रांतिर्न भवेत् । सत्वस्य विद्यमानत्वात् ।

सदसदात्मकं सत्वेन विषयीकुर्वन्कथं न भ्रांतिरिति चेत् । तत्किमेकदेशदर्शनं भ्रांतिः । तथा च बाधकप्रत्ययोप्यसन्मात्रावलंबी न कथं भ्रांतिः । सदेवेत्यसत्वनिषेधो भ्रांतित्वमिति चेत् । तर्ह्यसदेवेति सत्वप्रतिषेधात् बाधस्यापि भ्रांतितानिस्तारः । तस्मादसदेवविभ्रमालंबनम् ।

न चासतोवभासानुपपत्तिः विवेकाग्रहस्य निस्तरत्वात् । अन्यथाख्यातिवादिभिः असत एव तादात्म्यस्य संसर्गस्य वा प्रतिभासाभ्युपगमात् । विज्ञानाख्यातिवादिभिरपि असत्या एव बाह्यतायाः प्रतीत्यंगीकारात् सत एव प्रतीतिरिति पक्षे न भ्रांतिर्नापि बाध इति ।

अत्रेदं विवेचनीयम् । केनायमसत्ख्यातिरिति । यदि सदेव शुक्तिका सकलदेशकालासद्रजतात्मनावगाहमानं ज्ञानमिति तदानुज्ञया वर्तामहे । यथोक्तम् । तस्माद्यदन्ययासंतमन्यथा प्रतिपद्यते । तन्निरालंबनं ज्ञानमसदालंबनं च तदिति ॥

यदि पुनरिदं रजतमित्यवभासेचकासदसंदेवाखिल–

मिति । तदसत् । इदंकारास्पदस्य शुक्तिकाशकलस्य प्रागूर्ध्वं च सत्तावगमात् ।

यदि च न तदिदंकारस्पदं तदा न भ्रांतिबाधयोरंगुल्यग्रेण, निर्दिशेत्, नोपादद्यान्न परित्यजेत् ।

किं चास्य कारणं वक्तव्यम् । दुष्टेंद्रियादिकमिति चेन्न । तस्य सन्निकर्षाद्यनपेक्षस्य कारणतायामतिप्रसंगात् । असतोश्च सन्निकर्षायोगात् । शुक्त्यादिना सन्निकर्षोस्तीति चेन्न । तथा सति तज्ज्ञानस्यावर्जनीयत्वात् ॥

अथ संवृतिरेव रजतादि प्रतिभासकारणं तदांधस्यापि असन्निहितेपि शुक्तिशकले किं न स्यात् । अथ काचादिवच्छुक्तींद्रियसंनिकर्षोपि संवृतेः सहकारीतिचेन्न । तथात्वे भूतलवच्छुक्तेरपि शुक्तित्वेनावभासप्रसंगात् । दोषनिमित्तः शुक्तित्वानवगमोपि कारणमिति चेन्न । अधिष्ठानत्वानभ्युपगमे भूतलशुक्तिशकलयोरविशेषेण कस्यानवगमः कारणमिति विवेक्तुमशक्यत्वात् । अपि चासदेव रजतमवभासमानं न तावदसत्तयैव भासते । अर्थक्रियानर्हे प्रवृत्त्यनुपपत्तेः । सत्तया प्रतिभासेत्वन्यथाख्यातिरंगीकृतेति शुक्तिरेव रूप्यतयाऽवभासत इति कुतोनंगीकरणीयम् । तथा सत्यंगुल्यग्रनिर्देशादयोप्यनुकूलितास्युः ।

केशोंडुकाहि विभ्रमस्तर्हि कथमिति चेत् । सोऽपि तेजःप्रभृतिद्रव्यमालंब्यैवेति वदामः । तस्मात् नैवंविधासत्ख्यातिपक्षोऽपि साधीयान् ॥

## इति अख्यातिवादः समाप्तः



## अथ वेदप्रामाण्यवादः

अत्राहुः ॥ यदनृतं तदप्रमाणं दृष्टम् । यथोन्मत्तवाक्यम् । अनृतं च पुत्रकामः पुत्रकामेष्ट्या यजेतेत्यादि वेदवाक्यम् । कृतायामपीष्टौ पुत्रजन्मानुपलंभात् ।

युक्तिविरुद्धं चाप्रमाणम् । युक्तिविरुद्धं च मृदन्नव्रीहित्यादिवाक्यम् । स्वव्याहतं चाप्रमाणं दृष्टम् । स्वव्याहतं चोदिते होतव्यमनुदिते होतव्यमित्यादि ।

पुनरुक्तं चाप्रमाणम् । पुनरुक्तं च वेदवाक्यम् । शाखांतरोक्तस्य शाखांतरेभिधानात् । एकस्यामपि शाखायां वाक्यावृत्तिदर्शनात् । त्रिः प्रथमामन्वाहरुत्तमामिति स्वयमेव

विधानाच्च ।

निरर्थकं चाप्रमाणम् । निरर्थकं च शृण्वेत्यादिकम् ।

प्रमाणांतरसिद्धार्थं च न प्रमाणम् । तथाविधं च अग्निर्हिमस्य भेषजमित्यादिवाक्यम् ।

एवं पुराणेप्यनृतत्वादीनि द्रष्टव्यानि । तद्दृष्टांतेनाशेषस्यापि वेदादिभागस्याप्रामाण्यमनुमातव्यम् ।

किं च संवादादिरहितं विप्रलंभकादिवाक्यमप्रमाणम् । तथाविधं च वेदादिकम् । एवमनेकदोषग्रस्तत्वाद्वेदस्य प्रामाण्यं नास्तीति । बौद्धमतम् ।

अत्र प्रष्टव्यम् । किमिदमनृतत्वम् । अर्थशून्यत्वं वा प्रमाणांतरविसंवादो वा ।

नाद्यः । साध्याविशिष्टत्वात् । द्वितीयेऽपि विसंवादः किमापाततः सर्वथा वा । नाद्यः । तस्य सर्वत्रसंभवेनानैकांत्यात् । न द्वितीयः । संदिग्धासिद्धत्वात् ।

किमत्र सर्वथा प्रमाणविसंवादएव उत वैगुण्यादिनिमित्तं फलादर्शनादिकमिति संदेहापरिहारात् ।

व्याघातेनापि द्वयोरप्रामाण्यसाध्यमुतान्यतरस्य । नाद्यः । अन्यतरप्रामाण्येपि व्याघातसंभवेन संदिग्धकालातीतत्वस्यानैकांतित्वस्य चापातात् । न द्वितीयः । पक्षीकृतस्यैव प्रामाण्यसंभवेन संदिग्धबाधानिस्तारात् ।

किं च व्याघातोप्यापाततः सर्वथा वा । नाद्यः । अनैकांत्यात् । द्वितीये संदिग्धासिद्धिः । किमत्र सर्वथा व्याघात एव उताधिकार्यादिभेदेनव्यवस्थेति संदेहानिस्तारात् । पौनरुक्त्यं तु प्रमाणसंप्लवे व्यभिचारादप्रामाण्यस्य साधकं न भवति । व्यर्थत्वादिहेतुना अप्रामाण्यं कथंचित्साधयितुं शक्यते । व्यर्थत्वमप्यत्र नास्ति । किमिदं पुनरुक्तमेवोताधिकविवक्षादिनानुवादादिरूपमिति संदिग्धत्वात् ।

एतेन प्रमाणांतरसिद्धार्थमपि निरस्तम् । नैरर्थक्यमथापाततः सर्वथा वा । नाद्यः । अनैकांत्यात् । न द्वितीयः । संदिग्धत्वात् । किमत्र शक्तितात्पर्यापरिज्ञानादर्थाप्रतिपत्तिः उत सर्वथा नैरर्थक्यादिति संदेहात् । संवादराहित्यं च भागासिद्धम् । अग्निर्हिमस्येत्यादेस्संवाददर्शनात् । किमयथार्थत्वादेव संवादोत्र नास्ति । उतैतस्य तदेकप्रमाणत्वादित्यन्यथासिद्धिसंदेहाच्च न प्रमाणमिति ॥

अस्त्वेवं हेतूनां संदिग्धासिद्धत्वादिना वेदाप्रामाण्यानिश्चयः । तथापि तत्संदेहोस्त्येव । वैगुण्यादिनिमित्तत्वादेरनि-

श्चितत्वादिति । मैवम् । करणानां अप्रामाण्यं स्वल्पबोधकत्वं विपरीतबोधकत्वं वा ।

तत्र शब्दस्याबोधकत्वं द्वेधा । पदाभिमतानां निरभिधेयत्वेन । साभिधेयत्वेप्यन्वयाभावेन चेति ॥ विपरीतबोधकत्वं विपरीतान्वयेन । तदिदं स्वतंत्रवक्तृपुरुषदोषाधीनम् । न तु स्वभाव इत्यप्रामाण्यस्य परतस्त्वव्युत्पादनसमये वक्ष्यते ।

पुरुषो ह्यज्ञानाद्विपरीतज्ञानात्प्रमादात् । अपटुकरणत्वाद्वा निरभिधेयान् निरन्वयान्वा शब्दान्प्रयुङ्क्ते । प्रमादात् करणापटुत्वाद् विपरीतज्ञानात् उक्तहेतोः विप्रलंभकत्वाद्वा विपरीतान्वयान् एतदभावश्च द्वेधा संभवति । अपौरुषेयत्वेन वा वक्तुराप्तत्वेन वा विवक्षितार्थज्ञानादेराप्तिशब्दार्थत्वात् ॥

तत्र वेदस्यापौरुषेयत्वेन पुरुषदोषनिबंधनदोषाभावात् । कारणाभावे च कार्यस्य शङ्कितुमशक्यत्वात् अप्रामाण्यो निश्चीयते । वेदो नाप्रमाणं अप्रामाण्यकारणदोषशून्यत्वात् । प्रत्यक्षादिवत् । शब्ददोषश्च पुरुषदोषाधीनः । तदन्वयव्यतिरेकानुविधायित्वात् । यद्यदन्वयव्यतिरेकानुविधायि तत्तदधीनं यथा पटस्तंत्वधीनः । वेदो न पुरुषदोषनिबन्धनदोषवान् पुरुषाप्रणीतत्वात् । यद्येनाप्रणीतं वाक्यं न तद्दोषप्रयुक्तदोषवत् । यथा यज्ञदत्ताप्रणीतं वाक्यं न यज्ञदोषप्रयुक्तदोषवदिति ।

विपक्षे तत्कारणकार्योत्पत्तिप्रसंगः । वेदोऽप्रमाणं आप्ताप्रणीतवाक्यत्वात् उन्मत्तवाक्यवदिति चेन्न । वाक्यत्वावच्छिन्ने साध्येऽनाप्तप्रणीतत्वस्य केवले वा अप्रामाण्यकारणदोषवत्त्वस्योपाधित्वात् । अनाप्तप्रणीतत्वात् उपाधिः । पुराणानां प्रामाण्यं तु इतिहासः पुराणः पंचमो वेदानां वेद इति वेदेन वेदसमानतया गृहीतत्वात् । अपौरुषेयवाक्यमस्तीति कथमुपपन्नं वाक्यत्वापौरुषेयत्वयोः परस्परपरिहारेण त्युपलंभात् । न च तत्संभावनमपि युक्तं संभावितस्यैवासाधनत्वादिति चेन्न । अपौरुषेयवाक्यानंगीकारे धर्माद्यसिद्धिप्रसंगात्सर्वैः समयिभिः धर्मादिनिश्चयार्थं किमप्यपौरुषेयं वाक्यं अंगीकार्यम् । धर्मादिः प्रमाणांतरावेद्यत्वात् । ततश्च कथं असंभावितमित्यभिप्रायः । लोकायत पक्ष प्रतिक्षेपः । चार्वाकशास्त्रं नोपादेयं विषयाद्यभावात् काकदंतपरीक्षकग्रंथवत् ।

तथा हि । न तावल्लोकायतशास्त्रस्य ऐंद्रियको विषयः प्रत्यक्षत एव तत्सिद्धौ शास्त्रानपेक्षणात् । फलमपि न दृष्टमर्थादिकं तस्यान्यतो लभ्यत्वात् । अतः संबंधोऽपि नास्ति । अतो धर्मादिकं अतींद्रियविषयत्वेन स्वर्गापवर्गादिकं च फलत्वे नांगीकार्यम् । यद्येतं नांगीक्रियते तर्हि तत्समयस्याशास्त्रत्वं स्यात् । वक्तृश्रोत्रोरभिमतं अनन्यसाध्यं फलमधिकृत्य तद्धेतुभूतं प्रमाणांतराप्राप्तमर्थं प्रमाणांतराप्राप्तमर्थं प्रतिपादयतां वाक्यानां समूहो हि शास्त्रमित्युच्यते । एवं

चाशास्त्रत्वात्तौ तस्याशास्त्रित्वं प्रसज्जेत ॥

ननु लोकायतशास्त्रस्य धर्माद्यभावो विषयः । तत्प्रतिपादनेन धर्मादिसद्भावभ्रांतिनिवृत्तिः । तत्फलं च लोकस्य निरंकुशः कामोपभोगः दुःखनिवृत्तिश्च । शास्त्रप्रणेतुश्च लोकोपकारः फलम् । उपकृताश्च लोकाः अनुरागिणो भवन्ति जनानुरागप्रभवश्च संपद इति ।

एतदप्यसत् । धर्माधर्माभावज्ञाने परस्परहिंसादिनापकारस्यैव प्राप्तेः । किं च चार्वाकस्य धर्माद्यभावसंभावना उताऽभावनिश्चयः । आद्येन तत्र प्रवर्तेत नापि ततो निवर्तेत । द्वितीये कुतो निश्चय इति वाच्यम् । घटाद्यभाव निश्चय इति प्रत्यक्षेणैवधर्माद्यभाव निश्चय इति चेन्न । अयोग्यतया चक्षुपा रसस्यैव प्रत्यक्षेण सतोप्यग्रहणोपपत्तेः ।

सत्यां तु वादि विप्रतिपत्तौ सति चायोग्यतया क्वचिदनुपलंभे प्रत्यक्षानुपलब्धिः संशयमेव संपादयति । किमनुपलंभान्नास्त्येव धर्मादिकं उतवाद्यंतरोक्तरीत्या चक्षुषानुपलभ्यमानोऽपि रसो रसनेनैवायोग्यतया प्रत्यक्षेणानुपलभ्यमानमपि प्रमाणांतरादस्तीति ।

तथा चैतत्संशयनिरासार्थमप्यागमादिकं प्रमाणमंगीकार्यम् तथा सति तेनैव सुकरं धर्मादिसाधनम् ।

किं चागमादिप्रामाण्याभावे लोकव्यवहारोच्छेदः प्रसज्येत ।

ननु संभावनामात्रेण तत्सिद्धिः । संवादेन च प्रामाण्याभिमान इति चेत् । एवं तर्ह्यागमादिकं ज्ञानमुत्पादयति । तच्च संवादीत्यंगीकृतम् । किमुतोधिकं प्रामाण्यं नाम, यन्नांगीक्रियते । तदेवं चार्वाकेणापि धर्मादिकमंगीकार्यमिति स्थितम् । इति चार्वाकनिरासः ।

धर्मादिकं बुद्धऋषभेश्वरवचनात्सिध्यति । तच्च तेषां सार्वज्ञादुपपन्नमिति तेनदप्ययुक्तम् ।

तथा हि । न तावत्तदीये सार्वज्ञे अस्माकं प्रत्यक्षमस्ति । अस्माकमपि तत्प्रसंगात् । सर्वं हि ज्ञात्वा तदीय ज्ञानस्य तद्विषयत्वं प्रत्यक्षेण ज्ञातव्यम् । न चास्माकं सार्वज्ञमस्ति । तथात्वे बौद्धादिकल्पनावैयर्थ्यात् ।

नाप्यनुमानम् । यद्धि येन धर्मेण व्याप्तमन्यतोपलब्धं तत्तस्यैव गमकं भवति । न च सर्वज्ञत्वं अन्यत्र दृष्टम् । येनानुमानस्य व्याप्तिर्गृह्यते ।

नाप्यागमः । अपौरुषेयस्य तस्यानंगीकारात् । पौरुषेयोऽपि किं सर्वज्ञप्रणीतो उतअन्य प्रणीतः । नांत्यः ।

अनाश्वासात् । आद्येपि किं तेनैव प्रणीतः उत सर्वज्ञांतरप्रणीतः । नाद्यः । इतरेतराश्रयप्रसंगात् । यस्य सार्वज्ञसिद्धौ तत्प्रणीतागमस्य प्रामाण्यसिद्धिः । तेन च तस्य सार्वज्ञसिद्धिरिति । अन्यथास्मद्वाक्येनैवास्माकमपि तत्सिध्येत् । न द्वितीयः । पुरुषांतरे सार्वज्ञस्यादृष्टत्वात् । सर्वज्ञांतरवाक्येन तत्कल्पनेऽनवस्थितेः ।

नाप्युपमानम् । तद्धिसदृशमित्येतत् मद्दृशोसाविति वोत्पद्येत । न चान्यत्र सार्वज्ञप्रमितं येनोपमानस्योदयस्यात् ।

नाप्यर्थापत्तिः । अनुपपत्यभावात् । बुद्धस्य धर्मातिदेशनं महाजनपरिगृहीतत्वं वा अनुपद्यमानं सार्वज्ञं गमयतीति चेत् । तर्हि जिनस्याऽपि तत्स्यात् । न चास्तीति वाच्यम् । विप्रतिपत्यभावप्रसंगात् ।

नाप्यभावः । तस्य भावविषयतायाः क्वाप्यदृष्टत्वात् ।

आर्हतास्त्वाहुः । कश्चिदात्मा सकलपदार्थसाक्षात्कारी तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबंधत्वात् ।

यदेवं तदेवं यथा अपगततिमिरादिप्रतिबन्धं लोचनविज्ञानं रूपसाक्षात्कारीति । तदसत् । पक्षस्याप्यप्रसिद्धविशेषणत्वात् तद्ग्रहस्वभावत्वं च किं विवक्षितस्यैवात्मनः

अङ्गीक्रियते । किं सर्वेषां वा । नाद्यः । अन्यत्रादृष्टत्वेनात्मत्वात्तत्रापि तदभावसाधनसौलभ्यात् । न द्वितीयः अस्मदादौ तत्स्वभावस्य प्रमाणादृष्टत्वात् । व्याप्तिज्ञानं सर्वविषयं सर्वात्मना स्वभावो दृश्यत इति चेन्न । परोक्षसामान्यज्ञानस्वभावत्वेन अपरोक्षविशेषज्ञानसाधनस्यातिप्रसंगित्वात् दृष्टान्तस्य साधनविकलत्वाच्च । न हि लोचनविज्ञानं रसादिसकलपदार्थसाक्षात्कारस्वभाववत् । येनाप्यन्यत्रप्रतिबन्धकल्पनं प्रतिबन्धासंभवाच्च । तत्पक्षेऽप्यनुपपन्नं इति साधनविकलः ॥

किंचान्यत्रादृष्टस्यावरणप्रक्षयस्य विवक्षितेऽप्यात्मनि कुतः सिद्धिः । विमतमावरणं, आव्रियमाणे सत्यपि स्वयं नाशवत्, आवरणत्वात् मेघवदिति चेन्न । दुर्गमप्रदेशगततिमिरादौ व्यभिचारात् । कमनीयकान्तास्पर्शादावपि रागाद्यनुदयात् प्रक्षीणप्रतिबन्धकत्वसिद्धिरिति चेन्न । तदनिश्चयात् ।

बाह्यविक्रियाभावेन तन्निश्चय इति चेत् जगद्वशीकरणार्थं स्थैर्येण स्थगनसंभवात् ।

दृष्टान्तस्य साध्यविकलत्वं च । लोचनविज्ञानस्य साक्षात्कारवत्त्वात् । विमतः आत्मा सर्वज्ञो न भवति आत्मत्वात् देवदत्तवत् ॥ इति आर्हतमतनिरासः ॥

ननु धर्मादिकं कस्यचित् प्रत्यक्षं प्रमेयत्वात् घटवत्

इति सार्वज्ञे मानमिति चेन्न । प्रमेयत्वेन विप्रतिपन्नधर्मांतरसाधनापातात् । किमिदं प्रमेयत्वं द्रव्यं गुणो वा उत आहोस्वित् सामान्यं विशेषो वा । यद्वा समवायः अभावो वा । नाद्यः । निर्गुणत्वात् अस्वतंत्रत्वाच्च । न द्वितीयतृतीयौ । गुणादावपि वृत्तेः । न चतुर्थः । केवलान्वयि धर्मत्वात् । उपाधित्वेऽपि क्वचित् अंतर्भावस्यापेक्षितत्वात् । नापि विशेषः । अनिऽत्येपिवृत्तेः । न षष्ठः । असंबंधत्वात् । न सप्तमः । प्रतियोगिनिरपेक्षत्वात् ।

प्रमेयस्य भावः प्रमेयत्वं न तु ततोतिरिक्तमिति चेत् । भावभवित्रोः भेदपुनरुक्तानतिवृत्तेः । भावस्य भवितुः पृथगभावे तच्छब्दयोः पर्यायतापातात् । एवं परत्वादि गुणानां च दत्तजलांजलिता स्यात् । प्रमातद्विषयतत्संबंधेषु अंतर्भावोऽस्तीति चेन्न । प्रमाप्रमेययोः संबंधस्यैव दुर्निरूपत्वात् । नह्यात्मगुणस्यान्येन समवायः संयोगो वा संभवति । विषयविषयिभाव एवेति चेन्न । तस्यापि अंतर्भाव्यत्वात् । अंतर्भाव्यस्य चोक्तदोषलंघनाजंघालत्वात् ॥

आर्हतानामप्येवमेवानुमानं धर्मादिकं कस्यचित् प्रत्यक्षं वस्तुत्वादिति । अत्रोत्तरं धर्मादेः प्रत्यक्षमात्रं साध्यते उतैक पुरुषप्रत्यक्षत्वम् । आद्ये अर्थांतरम् । कस्यचित् केनचित् प्रत्यक्षीकृतत्वेनापि प्रतिज्ञातार्थस्य सिद्धेः । न द्वितीयः ।

दृष्टांतेऽदुष्टत्वात् । न च पक्षातिरिक्तस्य सर्वस्यैकपुरुषप्रत्यक्षत्वं सम्मतम् । दृष्टांतभूतानां घटानामानन्त्येनैकेन परोक्षीकर्तुमशक्यत्वात् ।

यथा एको घटः एकस्य प्रत्यक्षः एवमत्रापि इति चेत् । तर्हि दृष्टांतानुकूल्येन धर्मःकस्यचित् प्रत्यक्षोऽधर्मस्य परस्येति प्रतिज्ञार्थं स्यात् । तथा च पुनः अर्थांतरत्वम् ।

धर्मं पश्यन् अधर्मं कथं न पश्यतीति चेत् किमयं संभावना अथानुमानम् । नाद्यः असाधकत्वात् । न द्वितीयः व्याप्त्यभावात् ।

योऽन्नत्रयमेकं करोति सोऽपरमपीतिव्याप्तिरिति चेन्न । कंटकाम् भक्षयितरि उष्ट्रे कदलीफलभक्षणस्यादृष्टत्वात् । धर्मादिज्ञानेनैव प्रवृत्तोपयोगात् किं कीटकसंख्यापरिज्ञानेनेति चेन्न । धर्मादिसाध्यसाधनाद्यपरिज्ञाने धर्मादिज्ञानस्यानुपयुक्तत्वादिति ।

ननु क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवदिति क्षित्यादेः कर्तरि सिद्धेतस्य सार्वज्ञमपि सिद्धमेव । उपादानादि साक्षात्कारवत एव कर्तृत्वात् । सर्वस्यापि क्षित्याद्युपादानादौ प्रविष्टत्वादिति चेन्न । घटादीनां कर्तरि कुलालादौ तदुपादानादि विषय विषय साक्षात्कारस्यादृष्टत्वात् ।

नहि कुलालो घटं फलपरिमाणेयत्ताविशेषवंतं तं वा कालं देशं अदृष्टं तदाश्रयं वा साक्षात्करोति । किं च घटादौ सपक्षेऽदृष्टस्यैवककर्तृकत्वस्य क्षित्यादौ कुतः सिद्धिः । यतः तस्य सार्वज्ञं स्यात् । कल्पनालाघवादिति चेन्न । अतिबहुतरकार्यजातस्यानेककर्तृतया एवोचितत्वात् ।

किंचित् घटादौ शरीरजन्यत्वस्योपाधेः सत्वात् । शरीरजन्यत्वेन सत्प्रतिपक्षात्वाच्च ।

एवं सार्वज्ञसिद्धौ तस्य अविप्रलंभकत्वमपि अप्रामाणिकं कल्प्यमेव । सार्वज्ञेऽपि कुतो विप्रलंभाभावः । रागाद्यभाव-दिति चेन्न । तद्रहितेषु अपि बुद्धादिष्वीश्वरावतारेषु दर्शनात् । वीतरागाणामपि ज्ञानांकुरसंरक्षणार्थं छलादिना प्रतिप्रतारणस्य सर्वैरङ्गीकृतत्वाच्च ।

एवं पटुकरणत्वादिकं कल्प्यमेव । किं चास्तु कश्चित् सर्वज्ञो विप्रलंभकश्च । तथापि धर्मादि प्रतिपादकस्य वाक्य-विशेषस्य तत्कर्तृत्वं कुतः सिद्धम् । नह्येवंविधः संसारमग्नान् जंतून् अवलोक्यन्नानुपदिश्य स्थातुमर्हतीति चेन्न । एवं भूतानामपि सिद्धानां उदासीनानां अंगीकृतत्वात् ।

एवं कस्यचित्सार्वज्ञकल्पनं तस्याविप्रलंभकत्वकल्पनं धर्मादिविषयवाक्यस्य तत्कृतत्वकल्पनं चेति कल्पनागौरव-

प्रसंगेन न पौरुषेयेण वाक्येन धर्मादि निश्चयः ॥

ननु अपौरुषेयवाक्यांगीकारेऽपि कल्पनागौरवं सममेवेति चेन्न । पौरुषेयवाक्येन धर्मादिनिश्चयरक्षे यथा बहुतरकल्पनापक्षे यथा बहुतरकल्पनात्र तथास्ति अपौरुषेयस्यैव कल्प्यत्वात् । एवं सर्वसमयिभिरपौरुषेयवाक्यांगीकार्यत्वात् । वेदवाक्यस्यापौरुषेयत्वं नासंभावितमिति ।

वेदोऽपौरुषेयोप्रमितकर्तृकत्वात् गगनवत् । ननु यथा गिरिदरीवर्तिनस्तृणांकुरस्याप्रमितस्य कर्तुः सद्भावः शंक्यते । एवमप्रमितस्यापि वेदस्य सद्भावः शंक्यत इति युक्तम् । तथा हि । अप्रमितमपि वेदस्य कर्तारं शंकमानः किं धर्मादिकं अंगीकरोति न वा । नेति पक्षे न समयीस्यात् । आद्ये तन्निश्चयः केनेति ब्रूमः । न तावत् अनुमानेन निरस्तत्वात् । बुद्धवाक्येन वापौरुषेयं वाक्यांतरकल्पनतया वा उभयथापि कल्पनागौरवं स्यात् । अतो वेदस्य कर्ता न शंकनीयः ।

कल्पनागौरवप्रसंगतया कर्तरि वेदस्याकर्तृकत्वं सिद्धमेव ।

धर्माद्यंगीकारवता वेदस्याप्रमितोऽपि कर्ता यथा शंक्यते तर्हि धर्मादिनिश्चयार्थं प्रमाणांतराकांक्षायां कल्पनागौरवं स्यादित्यनुमानस्य अनुकूलतर्कः ।

नन्वसिद्धं वेदस्याप्रमितकर्तृकत्वं वेदः सकर्तृकः वाक्यत्वात् लौकिकवाक्यवदित्यनुमानेन वेदकर्तृ प्रमितत्वादिति चेन्न । वाक्यत्वादौ समानेपि अस्य वेदत्वादकर्तृकत्वं भवतु जन्यस्य तदभावात्सकर्तृकत्वमस्त्वित्याशंकायां बाधकाभावेन वाक्यत्वस्य अप्रयोजकत्वात् ॥

वेदत्वं नाम अनुपलभ्यमानप्रत्यक्षादिप्रमाणविप्रलंभादिमूलत्वम् । एतच्च उदयनेनापि अंगीकृतम् । अनुपलभ्यमानमूलत्वे सति महाजनपरिगृहीतवाक्यत्वं वेदत्वमिति । आद्यविशेषणेन प्रमाणमूलस्य द्वितीयेन विप्रलंभादि मूलत्वस्य च व्यावर्तितत्वात् ।

नन्वेतद्वेदलक्षणगूढकर्तृके व्यभिचरति इति चेन्न । तस्य चाध्येतृपरंपराभावेन यस्मिन् विच्छेदः तदीयप्रत्यक्षादिमूलत्वस्यानुमानं शंक्यत्वात् ।

विमतं वाक्यं एतत्प्रत्यक्षादिमूलं अस्मिन् विच्छिन्नपरंपरत्वात् । यद्यस्मिन् विच्छिन्नपरं वाक्यं तत्र प्रत्यक्षादिमूलं यथा संप्रतिपन्नमिति ।

परंपरा नाम अध्येतॄणामध्यापकानां च पूर्वतनमेवेदमधीमहे । अध्यापयामश्चेति प्रतिपत्तिः । न तु अध्ययनाविच्छेदः । अतो ऋषिभिः दृष्टाशाखासु विच्छिन्नपरंपरात्वं

न कल्पनीयम् । मुनिभिर्दृष्टानामपिप्राक् न मे वेदमिति प्रतिपत्तिविषयत्वात् । अतो नानैकांत्यम् ।

गूढकर्तापि पूर्वतनमेवेदमधीयत इति यद्यनृतं वदति तर्हि कथं निश्चय इति चेन्न । वेदद्रष्टॄणां विंशल्लक्षणतोऽनून इत्युक्तलक्षणवत्त्वात् । गूढकर्तरि एतल्लक्षणाभावे तद्वचनस्य अनृतत्वं निश्चीयते । अथवा वेदत्वाभावे वाक्यत्वानुमानस्योपाधिः । एवं चाप्रयोजकान्यथासिद्धौ व्याप्यत्वासिद्धौ वाक्यत्वादिति हेतुरिति ।

यदि वेदस्य सकर्तृत्वमंगीक्रियते तर्हि कर्तुः सर्वज्ञादिकल्पनागौरवं स्यादिति । तर्कपराहतं च वाक्यत्वानुमानम् । ते च वेदाः सर्वज्ञप्रणीताः । वेदत्वात् व्यतिरेकेण लौकिकवाक्यवदित्यपास्तम् । वेदत्वस्य पामरप्रणीतत्वादौ साम्यात् । विपक्षे बाधकाभावेनाप्रयोजकत्वाच्च । किं च वेदस्य सर्वज्ञप्रणीतत्वनिश्चये सति प्रामाण्यनिश्चयः तन्निश्चयेच सर्वज्ञत्वनिश्चयः । ततश्च विशेषणप्रसिध्याऽनुमानप्रवृत्तौ वेदप्रामाण्यनिश्चय इति चक्रकप्रसंगः ॥

अपौरुषेयत्ववादः समाप्तः ॥

वेदः आप्तप्रणीतः प्रमाणवाक्यत्वादिति चेन्न । वेदानित्यत्वे प्रामाण्यविवादात् । यदुक्तं वाक्यत्वानुमानं विपक्षे बाधकाभावेन अप्रयोजकमिति । तदसत् । तथा हि

संवादेन खलु प्रमाणानां प्रामाण्यमनुमातव्यम् । संवादश्च साजातीयेन विजातीयेन वा भवति । तत्र वेदस्य न तावत् सजातीयसंवादोऽस्ति । सदागमैकविज्ञेयमिति तद्विषयस्य प्रमाणांतर अगोचरत्वाभ्युपगमात् । नाप्यर्थक्रियासामर्थ्यादिकं विजातीयमस्ति । मोक्षादेः प्रत्यक्षाद्यवेद्यत्वात् । तथा च आप्तोक्तत्वेनैव तत्प्रामाण्यमनुमातव्यम् । प्रमाणजन्यत्वेनैव तज्जन्यज्ञानप्रामाण्यमपि । ततश्च वेदस्याकर्तृकत्वे प्रामाण्या- सिद्धिप्रसंगस्य बाधकस्य विद्यमानत्वात् । कथं अप्रयोजकत्वं वाक्यत्वाद्यनुमानस्य । अत एवाकर्तृकत्वाद्यनुमानमपि प्रति- कूलतर्क पराहतम् । उपाधेरपि साध्यव्यापकताभंगः सिध्यति । यथोक्तम् । अनुकूलेन तर्केण सनाथे सति साधने । साध्यव्यापकताभङ्गात् पक्षोनोपाधिसंभवः । अत्राह । प्रामाण्यं च स्वत एवेति । ज्ञानजनकातिरिक्तजनकानपेक्षत्वमुत्पत्तौ स्वतस्त्वम् । ग्राहकातिरिक्तग्राहकानपेक्षत्वं ज्ञप्तौ स्वतस्त्वम् । ज्ञानं साक्षिप्रत्यक्षवेद्यम् । तत्प्रामाण्यमपि । इन्द्रियशब्द- लिंगानां तु यथार्थज्ञानसाधनत्वलक्षणं प्रामाण्यमन्वयव्यतिरे- कावसेयम् । तथा च कुत्रापि प्रामाण्यग्रहणेनाप्तोक्तत्वादे उपयोग इति ।

किं च यदि प्रामाण्यं संवादादेव ज्ञायते तत्संवादक- प्रामाण्यमपि संवादांतरेण ज्ञायते स्वत एव वा । आद्ये तदप्येवमेव इत्यनवस्था स्यात् । द्वितीये परंपराकल्पनं व्यर्थं

स्यात् । आद्यप्रामाण्यस्यैव तथात्वंगीकारोपपत्तेः । अतोपरिशेषात् स्वतस्त्वसिद्धिः ॥

तथा च प्रयोगः । ज्ञानगतयाथार्थ्यं तद्ग्राहकेणैव ग्राह्यम् । ग्राहकांतरानुत्पत्तौ सत्यां गृह्यमाणत्वात् । यद्यतोऽन्येनानुपपद्यमानग्रहणं गृह्यते तत्तेनैव ग्राह्यम् । यथा चक्षुषोऽन्येनानुपपद्यमानसाक्षात्क्रियमाणं रूपं चक्षुषैव साक्षात्क्रियत इति ।

न च विशेषणासिद्धिः । ग्राहकांतरस्यानवस्थाप्रसंगेन निरस्तत्वात् ।

न च साक्षिवेद्यत्वेऽप्यनवस्थाप्रसङ्ग समान इति वाच्यम् । साक्षी स्वयं प्रकाशः स्वात्मानं स्वप्रामाण्यं गोचरयतीति अंगीकारात् ।

ज्ञानस्यैव तथा भावोऽभ्युपगम्यतामिति चेन्न । अंतःकरणवृत्तेः जन्यत्वेन (जडत्वेन) स्वयं प्रकाशत्वायोगात् ।

ननु प्रामाण्यं परतो ज्ञायतेऽनभ्यासदशायां सांशयिकत्वादप्रमाण्यवत् । अप्रमाण्यं हि ज्ञानग्राहकातिरिक्तेन विसंवादादिना लिंगेनानुगमकमिति । एतदप्यनवस्थालक्षणप्रतिकूलतर्कपराहत अनुकूलतर्कशून्यं चासंशयस्य दोपादेवोपपत्तेः ।

स्वतस्त्वेनाभ्युपगतोपमानप्रामाण्येऽपि संशयदर्शनाच्च । बुद्धिदोषाभावेनानभ्यासदशापन्नज्ञानप्रामाण्यस्यापि निष्कंपस्यैव प्रतीयमानत्वाद्धेतोः असिद्धिः ।

ननु प्रामात्यस्य स्वतस्त्वे कथं तत्र निर्दोषत्वाद्युक्त्यनुसरणम् । उच्यते । साक्ष्येव ज्ञानं तत्प्रामाण्य च विषयीकर्तुं क्षमः । कारणांतरोपनिपातजेन मनसापराधेन प्रतिबद्धो ज्ञानमात्रं गृहीत्वा प्रामाण्यग्रहणस्य नेष्टे यथा स्वयमेव गतिसमर्थोऽपि गजो गोक्षुरकादिना प्रतिबद्धो न चलितुं क्षमते । तत्र तु युक्त्यनुसंधानलक्षणपरीक्षावसरः । सा च बुद्धिदोषमात्रं निरस्यति । तस्मिन् निरस्ते साक्षी स्वमहिम्नैव प्रामाण्यं गोचरयति । यथा गोक्षुरकाद्यपसरणे स्वयमेव गजो गच्छति । ततः प्राचीनो युक्त्युपन्यासः साक्षिणः प्रामाण्यग्रहणप्रतिबंधकबुद्धिदोषनिरासार्थमेव कृतो न तु प्रामाण्यज्ञानार्थमिति ।

एतेनैवैतदपि निरस्तम् । यदाहोदयनः । यदि स्वतो ज्ञायेत तदा कदाचिदपि प्रामाण्यसंशयो न स्यात् । ज्ञानत्वसंशयवदिति । प्रामाण्यस्वतस्त्वेऽपि संशयसंभवात् । धर्म्युपलब्धावपि व्याघातादिदर्शनेन साक्षिणि प्रतिबुद्धे प्रामाण्यविषये मनसि संशयाद्युपपत्तेः ।

यस्मिन्सत्येव यद्भवति नासति तत्खलु तस्य कारणम् ।

सतीष्वेव च युक्तिषु बुद्धिदोषनिरासो भवति नासतीषु । प्रामाण्यंतु अनृतव्याघाताद्यनुसंधानरूपबुद्धिदोषरहितानां पुंसां युक्त्यपेक्षां विनैव सिद्धमित्यनुभवसिद्धम् ।

ननु प्रामाण्यस्य परतःत्स्वे संवादपरंपरयानवस्थास्यादिति यदुक्तं तन्न । कदाचित्प्रामाण्यजिज्ञासायामेव संवादापेक्षणा-दिति चेत् । मैवम् । निश्शंकप्रवृत्तौ च शब्दवेद्यत्वात् ।

ज्ञाने हि जाते तत्प्रामाण्यानुपलब्धौ कथं संशयो न स्यात् । सति च प्रामाण्यसंशयेर्थसंशयोऽपि कथं न भवेत् । तथा च कथं निःशंकाप्रवृत्तिः स्यात् ।

यद्यपि लोके संशयतोपि प्रवृत्तिर्भवति । तथापि बहुतरशरीरायासवित्तव्ययादिसाध्यपारत्रिकी प्रवृत्तिः तथा भवितुमर्हति । यावच्छंकमेव संवादापेक्षणात् नानवस्थेति चेत् । तत्र वक्तव्यम् । किं च सर्वत्र नुवर्तते क्वचिन्नोत्पद्यत एव वा आद्ये कथमनवस्थाभावः । द्वितीये निरस्तप्रायः ।

अपि च संवादकमप्रामाण्यशंकां निवर्तयति । प्रामाण्यं ज्ञापयति वा । आद्ये प्रामाण्यस्य स्वतस्त्वप्राप्तिः (सिद्धिः) द्वितीये शंकाभावेपि संवादापेक्षा स्यात् । संवादकमुभयत्र प्रवर्तत इति चेन्न कल्पकाभावात् । बाधकवदुभयत्रव्यापारः किं न स्यादितिचेन्न । प्रामाण्यशंकाशून्यस्य प्रामाण्यज्ञाने

संवादनिरपेक्षत्वात् । बाधकेन विना निवृत्तप्रामाण्यशंकया-प्रामाण्यबुध्यनुदयानुभवात् ।

ज्ञानं स्वरूपेणैव प्रवृत्तिहेतुर्न तु तत् ज्ञानमपेक्ष्यत इति चेत् । तथापि सुखादिवत्सत्यां सामग्र्यां वेद्यत्वापरिहारात् ; सुखादिकमनुवृत्तिसतग्राह्यम् न तु तथा ज्ञानम् । अन्यथा सुषुप्त्याद्यभावप्रसंगादिति चेन्न । तथा सति अप्रामाणिकस्य ज्ञानस्यासत्वप्रसंगात् । साक्षिवेद्यत्वपक्षे सुप्त्याद्यभावप्रसंगाभावात् । किं च परलोकार्थप्रवृत्तिमतो बुभुत्साप्यवर्जनीयैव । अन्यथा कथं तत्प्रामाण्यनिश्चयाय तज्जातीयत्वादिकमन्विष्यत इति ॥

ज्ञानग्राहकः साक्षीप्रमाणतयैव गृह्णातीत्युत्सर्ग एव । विसंवादलक्षणादपवादादप्रामाण्यं च गृह्णाति । सहकारिणः सहजशक्तिं प्रतिबध्य विपरीतशक्तिं जनयन्तीति हि प्रसिद्धम् । दावदहनदग्धानां वेत्रबीजानां वेत्रांकुरमजनयित्वा कदलीकांड-जनकत्वस्य दर्शनात् । विसंवादानुसंधानवतामेवाप्रामाण्यज्ञाप्ति-र्नतद्रहितानामिति व्यभिचरितानन्यथासिद्धान्वयव्यतिरेकि संभवादनु-मेयमेवाप्रामाण्यम् । न पुनः ज्ञानग्राहकमात्र ग्राह्यम् ।

नन्वेवं सति विसंवादाभावे सति प्रामाण्यं प्रतीयत इति तदपि परत एवास्यादिति चेन्न । वेत्रबीजस्य स्वांकु-रजनने दाहाभावसापेक्षत्वेपि न हि दाहाभावो वेत्रांकुरस्य कारणं भवति । किं तु ततो विपरीतकार्यानुत्पादे सति

वेत्रबीजं स्वमहिम्नैवांकुरं करोति । अन्यथा उत्सर्गापवादौ क्वापि न स्यातामिति भावः ।

किं चाप्रामाण्याग्रहणकारणाभावस्यापि प्रामाण्यग्रहणोपयोगांगीकारेऽपि नास्माकं हानिः स्वतस्त्वाविरोधात् ॥

इति प्रामाण्यस्वतस्त्ववादः ॥

ननु तथापि वेदस्यापौरुषेयत्वं न युज्यते । तस्य वर्णसमुदायरूपत्वात् । वर्णानां चोच्चारणेनोत्पद्यमानत्वादिति चेन्न । तदेवेदं वचनमिति प्रत्यभिज्ञाविरोधात् ।

न च सादृश्यात्प्रत्ययभिज्ञाभ्रांतिः वाच्यम् । सोऽयं देवदत्त इत्यादेरपि तथात्वप्राप्तेः । वैशेषिकादिभिः देवदत्तादेः पार्थिवद्रव्यस्य पाकेन प्रतिक्षणमुत्पत्तिविनाशांगीकारेपि परिणामवादभेदस्याति विद्यमानत्वेव सोऽयमितिप्रत्यभिज्ञानस्य भ्रांतत्वं प्रत्यंगीकृतं एव । तथा च तान्प्रत्येतदापादनं युक्तम् ।

सर्वक्षणिकत्वं वदतापि बौद्धेन सेयं दिगित्यादि प्रत्यभिज्ञायाः भ्रांतित्वं वाच्यम् । पंचस्कंदेभ्योन्यत्वात् । अत्र दिक् शब्देनाकाशोभिधीयते । आकाशस्यैव दिक्त्वात् । तथा चोक्तम् । आकाशौद्वौ विनाशौ च नित्यंत्रयमसंस्कृ-

तमिति । अत्र बौद्धैकदेशिनौ विज्ञानशून्यवादिनावाहतुः स्यादयं प्रसंगः सौत्रांतिकादीनाम् । यैर्दिशो नित्यत्वमंगीकृतम् । नास्माकम् । विज्ञातिरिक्तं शून्यातिरिक्तं वा सर्वभ्रांतिकल्पितमित्यंगीकारात् । तत्र दिगेव भ्रांतिकल्पिता कुतस्तस्यानित्यत्वं कुतस्तरां तत्प्रत्यभिज्ञाया अभ्रांतित्वमिति न वाच्यम् ।

तथा हि । किं दिशां भ्रांतिकल्पितत्वं केनचित्प्रमाणेनोच्यते एवमेव वा । नाद्यः । प्रपंचमिथ्यात्वप्रमाणानां अन्यत्र दूषितत्वात् । असाधारणप्रमाणस्यानुपलंभात् । न द्वितीयः । मिज्ञानशून्यविषये च भ्रांतिकल्पितत्वकल्पनस्य कर्तुं शक्यत्वात् ।

ननु यस्य स्वरूपमेव परोपाधिनिबंधनं तन्मिथ्या । यथांगुल्यवष्टम्भनयनोपाधिनिमित्तोऽपरचंद्रमाः । परोपाधिकं च दिक्स्वरूपम् । आदित्योदयादिनैव दिक्कल्पनात् । तत्कथं दिशोभ्रांतिकल्पितत्वं प्रमाणाभावादित्यत आह । न चादित्योदयेनैतद्दिक्कल्पना । कुतो नेति चेत् । दिक् सामान्यस्वरूपमादित्योदये कल्प्यं उत तद्विशेषस्वरूपम् ।

नाद्यः । अंधकारेपि दिङ्मात्रप्रतीतेः । यदि दिक्स्वरूपमौपाधिकं स्यात् तर्हि उपाधिं विना नोपलभ्येत । न हि नयनस्य अंगुल्यवष्टंभेन विना परचंद्रमा उपलभ्यते ।

उपलभ्यते चोपाधित्वाभिमतादित्योदयाभावेपि दिक् स्वरूपं तत्कथं तदुपाधिकं स्यात् । अवकाशमात्रं हि दिगित्युच्यते । तच्च परनिरपेक्षेणैव साक्षिणा सर्वास्ववस्थासु प्राणभृन्मात्रस्य सिद्धं कथमन्यथान्धकारे कराप्रसारणमपि कुर्युः ।

द्वितीयेपि किं दिग्विशेषस्वरूपमात्रमादित्योदयादिना कल्प्यं उत तदीयं प्राच्यादित्वं तत्राद्यस्य एतदेवोत्तरम् । अंधकारेपीति । अवकाशभागायेव हि दिग्विशेषाः । तेऽप्यादित्योदयादि निरपेक्षेण साक्षिणैव प्रतीयंते । कथमन्यथा तदभावेऽपि मूर्तांतरावष्टब्धावकाशभागपरित्यागेन भागांतरे कराप्रसारणादिकं क्रियते । न च भागानां औपाधिकत्वं स्वतो निर्भागस्योपाधिनापि संबंधाभावात् । प्राच्यादित्वं च यदि तत्स्वलक्षणं तदैतदेवोत्तरम् । अंधकारेपीति । अत्र प्राच्यादिशब्दवाच्यत्वं शब्दार्थसंबंधस्योत्पत्तिकत्वेन न काल्पनिकम् ।

एवं तर्हि दिक्प्रतीत्यर्थिनः किमित्यादित्योदयादिकं प्रतीक्षंत इत्यत आह । कादाचित्कभ्रांतिरेव आदित्यदर्शनात् निवार्यते ।

दिक्स्वरूपतद्विषयोः सिद्धत्वेपि दिगंतरे दिगंतरत्वभ्रांतिं निवर्तयितुमेव तत्प्रतीक्षणम् । अनेन प्राच्यादिशब्दव्युत्पादना-

वादित्यादीनां उपयोगोपि सूचितः । दिगंतरे दिगंतरस्य भ्रमस्य तद्विषयत्वात् ।

ननु दिशो वास्तवत्वे स्तंभादिवद्व्यवस्थितत्वं स्यात् । स्तंभो हि सर्वान्प्रति स्तंभ एव । न चेवं दिगस्माकं प्राच्याः अन्येषां प्रतीचीत्वात् । मैवम् । दिक्स्वरूपमधिकृत्यैतदुच्यते उत प्राच्यादिशब्दवाच्यत्वम् । नाद्यः । दिक्रूपस्य व्यवस्थितत्वात् । न द्वितीयः । तस्य संबंधिशब्दत्वात् । न हि पितापुत्रादिशब्दा अप्यव्यवस्थिता इत्येतावता । पित्रादिस्वरूप वक्तृशब्दवाक्यत्वं वा वास्तव भवतीति ।

ननु यदि दिशो भ्रांतिविषयत्वमंगीकृतं तदा मिथ्यात्वं सिद्धमेव शुक्तिरजतादिवदिति चेत् । किमारोप्यतया भ्रांतिविषयत्वं मिथ्यात्वे हेतुत्वेन विवक्षितम् । उताधिष्ठानतया अथ साधारणम् । आद्ये सिद्धसाधनम् । आरोप्याया दिशो मिथ्यात्वात्तेनांगीकारात् । आरोप्यमिथ्यात्वेपि प्रधानस्य सत्वोपपत्तेः । नापि द्वितीयतृतीयौ विज्ञानशून्ययोरपि साम्यात् । नोक्तरूपं विज्ञानशून्यं वा तत्वमिति वादिविप्रतिपत्तिविषयत्वात् । सा च तेषां प्रतिपत्तिः । भ्रांतिरिति परेणांगीकृतत्वात् ।

तथा चोक्तविषयभ्रांतिविषयित्वमनैकांतिकमिति । अतः तदेवेदं वाक्यमिति प्रत्यभिज्ञानाद्वेदस्यापौरुषेयत्वं सिद्धम् ।

किं च सामान्यसिद्धिपरिशेषाभ्यामपि वेदस्यापौरुषेयत्वं सिध्यति । तथा हि । अस्ति तावत् धर्माधर्मस्वर्गनरकादिषु सर्ववादिसंप्रतिपत्तिः यस्तु तान्नांगीकरोति सोऽपि पूर्वोक्तप्रकारेण बोधनीयः । ते च प्रामाण्योपेताः वस्तुत्वात् घटवत् । नह्यप्रामाणिके अर्थे सर्वेषां संप्रतिपत्तिः संभवति अतिप्रसंगात् ।

एवं सामान्यतो धर्मादिविषये प्रामाण्ये सिद्धे तस्य परिशेषेणापौरुषेयत्वम् ।

अनुमानादीनि धर्मादौ प्रमाणानि न भवन्ति । धर्मादीनां तदगोचरत्वात् । यो यद् गोचरो न भवति तत्र तं न प्रमाणम् । यथा संप्रतिपन्नम् । धर्मादीनिचानुमानादिति न प्रतीयंते । तदगोचरत्वादिति । प्रयोगद्वयं प्रसक्तप्रतिषेधार्थम् । तथा हि । प्रत्यक्षं न तावद् बाध्यम् । धर्मादौ प्रमाणं तस्य रूपादिमति द्रव्ये तदीयेषु गुणकर्मसामान्येष्वेव सामर्थ्यात् । नापि मानसं सुखं अनुभवामीतिवत् । धर्ममनुभवामीत्यनुव्यवसायाभावात् । न च धर्मादेर्योगिप्रत्यक्षसिद्धत्वं वाच्यम् । तत्र प्रमाणाभावात् ।

अस्तु वा योगिप्रत्यक्षवेद्यत्वं धर्मादेः कथमस्माकम् ।

मदीयेन प्रत्यक्षेण धर्मादिनिश्चयः तदनुमानं वा संभवति। नाप्यनुमानं तद्व्याप्तिलिंगाभावात् । सामान्यतो दृष्टे तत्कथंचित्स्वरूपमात्रसिद्धावपि न साधनफलसंबंधरूपस्तद्विशेषोनुमातुं शक्यः । न च तदनिश्चये अनुष्ठानं संभवति । न च पौरुषेयवाक्यं प्रमाणम् । पुरुषाणां अज्ञानादिसंभवेन धर्मेषु फलेष्टव्याश्वासानुपपत्तेः न च मन्त्रादिष्वाश्वासो दृश्यत इति वाच्यम् ! अपौरुषेयवाक्यमूलत्वनिश्चयेनैव तत्राप्याश्वमात् । ततोऽनुमानादिभिः धर्माद्यसिद्धेः सर्वैरपौरुषेयं वाक्यमंगीकार्यम् । तत्र वाक्ये वेद एव तदतिरिक्तस्यकर्तृप्रसिद्धिमत्त्वात् । सर्वेषां धर्मादिप्रतिपत्तिर्वेदेनैव किं तु धर्मादिस्वरूपे वेदेन प्रतीते तद्विशेषेषु तमतिक्रम्य स्वमतिदोषाद्यादिनांनिप्रतिपत्तयः प्रतीयन्ते । अन्यथा धर्मादेः बुद्धावारोहस्यैवासंभवात् ।

ननु प्रमाज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वादप्रमावदित्यनुमानेन ज्ञानस्य याथार्थ्यरूपं प्रामाण्यवाक्यगताप्तोक्तत्वगुणजन्यं दृष्टम् । अत एव वाक्यस्यापि यथार्थज्ञानसाधनत्वलक्षणं प्रामाण्यं आप्तोक्तत्वगुणाधीनमिति साधयितुं शक्यते । अतः कथं वेदस्यापौरुषेयत्वे तत्प्रामाण्यमुपपद्यते । प्रामाण्यकारणगुणाभावात् इति शंका च नोत्थानं लभते । प्रामाण्यस्य स्वतस्त्वांगीकारात् । गुणसन्निधे यादृच्छिकत्वकल्पनं युक्तम् । वेदापौरुषेयत्वस्योक्तवक्ष्यमाणानेकप्रमाणसिद्धत्वेन वेदापौरुषेयत्वस्य न हातुं शक्यत्वात् ।

प्रामाण्यस्य च नियमेन गुणजन्यत्वाभावात् । यादृच्छिकसंवादिनो नाम वाक्यस्य गुणाभावेपि यथार्थज्ञानजनकत्वात् । अतोक्तानुमानस्य बाधितविषयत्वम् ।

ननु यदि वाक्यमात्रस्य यथार्थज्ञानजनकत्वं तदा बौद्धादिवाक्यस्यापि तत्स्यात् । ततश्च तज्जन्यज्ञानं यथार्थमापद्यतेति चेत् । मैवम् । तस्य ज्ञानविप्रलंभादिदोषमूलत्वेनायथार्थज्ञानजनकत्वात् वाक्यगता हि दोषाः तस्य पदार्थज्ञानजननशक्तिं प्रतिबध्य विपरीतज्ञानजननशक्तिमाविर्भावयन्ति औत्सर्गिकत्वात् स्वतः प्रामाण्यस्यापवादेनाप्रामाण्यं च भवतीति किमनुपपन्नम् । वाक्यगतस्यायथार्थज्ञानजनकत्वलक्षणस्याप्रामाण्यस्य परतस्त्वानंगीकारे काचादिव्यभिचारादिदुष्टयोरिंद्रियलिंगयोरप्यप्रामाण्यहेतुत्वं न स्यात् । पुरुषदोषाणां वाक्याप्रामाण्यनिमित्तत्वाभावोहि द्वेधा भवति । दुष्टवाक्यस्याप्रामाण्याभावेनाप्रामाण्यस्य स्वतस्त्वेन वा । आद्ये दुष्टेंद्रियादेरप्रामाण्यं न स्यात् । द्वितीये काचादीनामपींद्रियाद्यप्रामाण्ये निमित्तत्वं न स्यात् । यद्युभयस्याप्यनभ्युपगमस्तर्हिनुभवविरोधः ।

तथा हि । दुष्टेंद्रियादेरप्रामाण्यानंगीकारः । किं तस्य ज्ञानकारणत्वाभावात् । याथार्थ्याद्वा काचादेरप्रामाण्यकारणत्वाभावाद्वा नाद्यः । ज्ञानस्येंद्रियान्वयव्यतिरेकानुविधानानु-

भवविरोधात् । न द्वितीयः । बाधानुभवविरोधात् तृतीयेत्वप्रामाण्यस्य काचाद्यन्वयव्यतिरेकानुविधानानुभवविरोधः ।

ननु यादृच्छिकसंवादिषु सत्यपिदोषेऽप्रामाण्याभावात्कथमप्रामाण्यस्य दोषान्वयव्यतिरेकानुविधानमिति चेन्न । तस्य सद्भाव एवोत्पादो नासद्भाव इत्यन्वयव्यतिरेकयोः कार्यकारणभावहेतुत्वात् । कारणे सत्यपि कार्यानुत्पादस्य सामग्र्यभावेन प्रतिबंधेनवोपपत्तेरिति । अत एव दोषाभावोपि न प्रामाण्यकारणम् ।

यादृच्छिकसंवादिषु सत्यपि दोषे प्रमाण्यज्ञानोदयात् अतः प्रामाण्यं स्वतःपरतोऽप्रामाण्यमिति सिद्धम् । वेदस्य नित्यत्वे श्रुतिरपि तस्मै नूनमभिद्यवेवाचाविरूदनित्यया ।

वृष्णेचोदस्वसुष्टुतिमितिमंत्रस्यायमर्थः । अभिनोद्यौः प्रकाशो यस्यासावभिद्युः । तस्मै अभिद्यवृष्णे वर्षित्रेनूनं निश्चितम् । भोविरूप नित्यया वाचा वेदलक्षणया सुष्टुतिं शोभनलक्षणांस्तु । तिंचोदस्वप्रेस्तुरय कुर्वित्यर्थः ।

वाक् शब्दो वागिंद्रियेऽपि प्रसिद्ध इति स्पष्टां श्रुतिं पठन्ति । नित्ययानित्ययास्तौमि ब्रह्मतत्परमं पदमिति परमं पदं परमं प्राप्यम् । अस्य मंत्रस्य ब्राह्मणं नित्यानित्यविवेचनपरं श्रुतिर्वावनित्या अनित्यावावस्मृतयो याश्चान्या-

वाच इति पैंगिश्रुतिः । विज्ञेयं परमं ब्रह्म ज्ञापिका परमा श्रुतिः । अनादिनित्या सा तच्च विना तां न सगम्यत इति कात्यायनश्रुतिः । परमं विज्ञेयं मुमुक्षूणां प्रधानं प्रमेयं परमाज्ञापिका प्रधानं प्रमाणं अनादीति तदुभयोपपादनम् ।

संबंधशब्दोक्तः परमात्मा । सहस्रधामहिमानः सहस्रं यावद् ब्रह्मविष्टितं तावतीवाक् । यस्य सहस्रमपरिमिता महिमानः प्रत्येकमपि सहस्रधा अपरिमितविधाः तद् ब्रह्म यावद्देशकालव्याप्तितया विष्टितं विशेषेणस्थितं वाग्वेद वागपि तावतीतावद्देशकालव्यापिनी । कः छंदसांयोगमावेदधीरः को धिष्ण्यां प्रतिवाचं पपादेति च ।

छंदसां वेदानां योगं अर्थैः सहवाच्यवाचकाभावसंबंधं कोधीरो मां वेद । सम्यग्वेद नकोपि । धिष्ण्यां बुद्धि-पूर्वां वाचं कः प्रतिपपाद परान्प्रति प्रतिपादितवान् न कोपि। वेदार्थस्य ज्ञाताज्ञात्वाव्याख्यातता च दुर्लभः किमुततत्कर्तेति । नित्यावेदाः समस्ताश्चेत्यादिब्रह्मांडे शाश्वता शश्वदेकप्रकाराः वेदस्य नित्यत्वे पुरुषाभिप्रायेण प्रवृत्तिः कथं युज्यत इति चेत् ।

एवं पूर्वस्थितान्येव वेदवाक्यानि कानिचित् केश्चिद्वा देवादिभिः पुरुषैः स्वाभिप्रायप्रवेशेन प्रयुज्यंते न चापूर्वाणि क्रियंत इत्यविरोधः । एतेनैतदपि निरस्तम् । वर्णास्ताव-

नित्यत्वात् सर्वगतत्वात् स्वतःक्रमशून्याः न च क्रमेण विना पदवाक्यभावः । नापितमंतरेण प्रामाण्यं अतः क्रमः पौरुषेय एव स्थेयः तत्कथं वेदस्याप्यपौरुषेयत्वमिति । नहि वयं वेदस्य कूटस्थनित्यतां ब्रूमः किंतु शब्दतो अर्थतश्च सर्वदैकप्रकारतामेव । ततश्च वर्णानां क्रमस्य पुरुषाधीनत्वेपि पुरुषाभिप्रायप्रवेशेपि पूर्वत्वेन क्रमानुसारेण इदानीं प्रयुज्यमानत्वात्स्वतंत्रस्ववक्तुरभावादपौरुषेयत्वमुपपद्यते ।

सर्ग इति । सप्तमी । वीप्सायां द्विर्वचनम् । उद्दीर्यंते उच्चार्यंते । आब्रह्मादीत् प्रत्युरादिप्यन्ते । तत्क्रमेण पूर्वकल्पप्रवक्तृक्रमेण । इत्थंभूतलक्षणे तृतीया ।

श्रुतित्वं श्रुतिशब्दवाच्यत्वम् । अतोऽपौरुषेयत्वादेवोपपद्यते । श्रुतत्वाद्धि श्रुतयः । श्रुतत्वं च शब्दमात्रसाधारणम् ।

ततश्चासाधारण्येन व्यपदेशा भवंतीतिन्यायेनाऽब्भक्षावायुभक्ष इतिवत् साधारण्येन व्याख्येयम् । निखिलैः श्रुता एव न तु केनापि श्रुता इत्यर्थः । ईश्वरेण दृष्टत्वात् दृष्टयश्च ।

ऋचः सामानि जज्ञिरे इत्याद्युत्पत्तिश्रवणात् कथं वेदानामपौरुषेयत्वमित्यत आह तदुत्पत्तीति व्यक्तिमतेक्ष्यैवेति संबंधः । तु शब्दो विशेषणार्थः । आदिकालीनाव्यक्ति-

मिति तेन प्रत्यक्षमप्युपाध्यायैर्व्यज्यमानत्वादुत्पत्तिव्यवहारप्रसंग इति निरस्तम् । स वेदार्त एवार्थो विषयप्रयोजनं च एषां तानि तथोक्तानि संवादांतरेत्यनेन मुख्याभिमानिनीं लक्ष्मीं व्यावर्तयति । वेदास्ते नित्यविन्नित्यत्वात् ।

वेदशब्दः सत्तार्थाद्विदेः पचाद्यचिकृते कर्तरि निष्पन्नः कर्ता च सर्वार्थसाधारणी असाधारण्येन व्यपदेशाभवंति अतो विन्नत्वादिति नित्यविद्यमानत्वादित्यर्थः ।

आम्नाय शब्दश्च आङ् पूर्वात् आम्नाय अभ्यासे इत्यस्मात्कर्मणि घयुकृते सिद्धः । अभ्यासश्चैकप्रकारात्कृदुक्ति तत्कर्मत्वं च शब्दान्तरसाधारणम् । अतो भूतवद्भवि यद्भिः रखिलैरप्येकप्रकारेणैव पठ्यन्त इति लभ्यते एतदेवनानित्यत्वमिति ।

वेदाः नित्यविन्नात्वादिति अकर्मकत्वात्कर्तरि क्तः । गतार्थाकर्मके स्मरणात् । धिद्यते विन्न इष्य इति च ।

अस्ति तावदीश्वरादयो वेदस्य द्रष्टार इति व्यवहारः स इममत्वमपश्यदित्यादिश्रुतेः । दर्शनं च पूर्वसिद्धस्य भवति । न हि यो यत्करोति स तत्पतीत्युच्यते । अतस्तदन्यथानुपपत्यापि नित्यत्वं सिद्धमिति ।

ईश्वरबुद्धौ सर्वदा प्रतीयमानत्वं न संस्कारमात्रेण किंतु वर्तमानतया सर्वदानुभूयमानत्वं विवक्षितम् । अन्यथा एत एव सर्गे अमुनोद्गीयन्त इत्युक्तप्रत्यभिज्ञाविरोधस्यादित्यर्थः न च सादृश्यादेतएवेत्युक्तमिति वाच्यम् । तथा सत्यपौरुषेयत्वे सिद्धेर्दुर्वारत्वात् ।

ननु नित्यत्वे वर्णानां कथं कदाचिदेवोपलब्धिः ।

न चेंद्रियसन्निकर्षस्य कादाचित्कत्वादिति वाच्यम् । तावतीवागिति व्यापकस्याभ्युपगतत्वेन सर्वदा श्रोत्रसंनिकृष्टत्वात् ।

अत्रैके ब्रुवते । स्थिमितेन वायुनावष्टब्धं श्रोत्रं सन्निकृष्टमपि शब्दं नोपलंभयति । वक्तुः कोष्ठ्यो वायुः प्रयत्नवदात्मसंयोगे प्रेरितः प्रतिष्ठमानः । उरप्रभृतीन्यष्टौ स्थानान्यभिहत्य श्रोतुः कर्णशष्कुलीं प्रविष्टः स्तिमितं वायुमपनयति । ततो वर्णोपलब्धिरिति । अपरे तु कोष्ठवायुसंयोग एव श्रोत्रस्य संस्कारो नापर इति तदुभयमप्यसत् । वायुसंयोगादनंतरं सर्वदा सर्ववर्णोपलब्धिः प्रसंगात् । उत्तरक्षण एव वायुविभागेन संयोगनाशान्नेति चेत् । अप्रामाणिककल्पनाप्रसंगात् । सर्वोपलब्धेरनिवारणाच्च । अन्ये तु वायुगुणः शब्दो ध्वनिलक्षणो वायुना सह श्रोत्रं प्रविष्टो

वर्णस्य व्यंजकः तेन व्यक्तो वर्ण उपलब्ध इति । एतदप्यसत् । वायुगुणत्वे शब्दस्य स्पर्शनग्राह्यत्वप्रसंगेन बधिराणामपि तदुपलब्धिप्रसक्तेः । श्रोत्राग्राह्यस्य तद्ग्राह्यवर्णव्यंजकत्वानुपपत्तेश्च । व्यंग्यव्यंजकयोरेकेंद्रियग्राह्यत्वस्य घटप्रदीपादौ दर्शनात् । एकस्मिन्वर्णे व्यक्ते तत्रस्थाः सर्वेपि वर्णा व्यक्ता इति सर्वोपलब्धेरपरिहाराच्च ॥

किं च यो वर्णो देवदत्तश्रोत्रे व्यक्तः स एव यज्ञदत्तश्रोत्रसन्निकृष्ट इति दूरस्थेनापि तेनोपलभ्यतेत्यत उक्तम् । आकाशगुणे शब्दे व्यज्यमाना इति । इदमुक्तं भवति । वक्तुः प्रयत्नप्रेरितो वायुरष्टाभिः स्थानैः संयुक्तः स्थानसंयुक्ताकाशे ध्वनिलक्षणं शब्दमुत्पादयति । स च देशांतरे प्रतिशब्दम् । यस्तु कर्णशष्कुल्यवच्छिन्नाकाशप्रदेशे समुत्पन्नः तद्गुणोध्वनिस्तस्मिन्व्यज्यमानो वर्णः श्रोत्रेण गृह्यते । ध्वनेः आशुतरविनाशित्वेन व्यंजकाभावान्न सर्वदोपलब्धिः । ते च ध्वनयः प्रतिनियता एव वर्णानां व्यंजका इति न सर्वोपलब्धिः प्रसंगः । भूताकाशमेवश्रोत्रं तद्गुणमेवध्वनिः स च स्वतः स्वावयवं अतः प्रदेशवर्ती ध्वनिः तदवच्छिन्नमेव वर्णं व्यंजयतीति न सर्वेषामुपलब्धिः समानदेशे कालवर्णानां धर्मापन्नानां प्रतिनियतव्यंजकव्यंगत्वं क्वापि नोपलब्धमिति चेत् । न गोत्वाश्वत्वादीनां प्रतिनियतव्यक्तिव्यंग्यत्वस्य परैरंगीकृतत्वात् ।

गोत्वादीनां व्यक्तिसर्वगतत्वेन समानदेशत्वं नास्तीति

चेत् । प्रत्यासत्तेरवर्जनीयत्वात् । समवायाभावस्य वर्णेष्वपि समानत्वात् । किं च ब्राह्मणत्वद्रव्यादीनां प्रतिनियते व्यंजकव्यंग्यत्वमंगीकृतमेव । रूपेण समानदेशस्यापि परिमाणस्य चतुष्टयसंनिकर्षाधिको व्यंजकः स्वीक्रियते । तथा क्षीरनीरादिपृथक्त्वादेः समानाभिहाराभावादिः न च वर्णव्यतिरिक्तो ध्वनिर्नास्ति । दूराद्वर्णाग्रहणेऽपि ध्वनिग्रहणात् । न चैतत् सर्वमप्रामाणिकं प्रत्यभिज्ञाप्रामाण्यस्योपपादित्वेन तद्बललब्धत्वात् ।

तत्र प्राभाकरास्त्वाहुः । स्यादेवोक्तं वेदप्रामाण्यादिकं समस्तम्, किं तर्हि यदुक्तं सदागमैकविज्ञेयमिति वेदानां विष्णुप्रतिपादकत्वं तन्नोपपद्यते । तथा हि । वाच्यवाचकसंबंधज्ञानलक्षणव्युत्पत्त्यपेक्षो हि शब्दोऽर्थं बोधयति नान्यथा । अन्वयव्यतिरेकाभ्यां तथावगमात् । व्युत्पत्तिश्च वृद्धव्यवहारदर्शनादेव भवति । वृद्धव्यवहारश्च कार्यप्रतिनिबंधन इति प्रतिपादकतैव शब्दस्य युक्ता ।

तथा हि । चैत्र जलमाहरेति प्रयोजकवृद्धवाक्यश्रवणानंतरं प्रयोज्यस्य वृद्धस्य जलाहरणविषयां प्रवृत्तिं दृष्ट्वा पार्श्वस्थो बाल एवमाकलयति । अस्येयं प्रवृत्तिर्बुद्धिपूर्वा तंत्रप्रवृत्तित्वान्मदीयस्तनपानादिप्रवृत्तिवदिति । पुनश्चास्य प्रवृत्तिहेतुर्बुद्धिः किं विषयेति जिज्ञासायामेवं निश्चिनोति । वृद्धस्याप्रवृत्तिहेतुभूता बुद्धिर्मम प्रवृत्तिहेतुभूता बुद्धिर्यद्विषया तद्विषयो

भवितुमर्हति । प्रवृत्तिहेतुभूतबुद्धिवदिति ।

पुनरेवमवधारयति यद्विषया सा बुद्धिप्रवृत्तिहेतुभूता–तद्वत्तस्यानेन शब्देन बोधितं तद्भावभावित्वात् । मम तु प्रमाणांतरेत्यावयवोर्विशेषः । तेन यद्बोधात् मम प्रवृत्ति-स्तदनेन शब्देन बोधितं तद्भावभावित्वात् । मम तु प्रमाणांतरेत्यावयोर्विशेषः । तेन यद्बोधान्मम प्रवृत्तिस्तदनेन शब्देन बोध्यत इति शब्दस्य प्रवृत्तिहेतुभूतार्थबोधकतेति ।

पुनश्च कासौ प्रवृत्तिहेतुभूतशब्दबोध्योर्थ इत्यवधारयितुं स्वात्मनि प्रतिपन्नं प्रवृत्तिहेतुभूतमर्थमनुसंधत्ते । तत्र न तावदहं क्रियामात्रं फलमात्रं क्रियाफलसंबंधमात्रं वा बुध्वा प्रवृत्तः किं तु कार्यमेव । ममेदं कार्यमिति प्रतीत्याहि स्तनपा–नादावहं प्रवृत्त इति स्वप्रवृत्तेः कार्यबोधपूर्वकतां निश्चित्या–यमपि कार्यावबोधादेव प्रवृत्त इत्यनुमाय वाक्यस्य तावत् सामान्यतः कार्यपरतामवधारयति ।

ततो लिङाद्यावापेकार्यावगमदर्शनात् । तदुद्धारे चाद–र्शनात्त एव कार्यावगतिं कुर्वंति । शब्दांतराणि च तद-न्वितांस्तानर्थानवगमयंतीत्यावापोद्वपाभ्यां अधिगच्छति ।

एवं लोके कार्य एव गृहीत शब्दसंगतिर्वेदेपि तदेव शब्दान् प्रत्येतुमर्हति । तत्र लिङादिप्रत्ययः कार्ये शरीरमे-

वाभिदधाति प्रकृतिस्तद्विषयम् । पदांतराणि च प्रकृत्यर्थ-विशेषणं कारकं तद्विशेषणं नामधेयं नियोज्यं चाभिदधति कार्यप्रतिपत्तौ व्याप्रियंते । संनिपत्योपकारकांगवाक्यानि यद्यपि कार्यांतरशून्यानि तथापि प्रधानकार्यान्वितस्वार्थाभिधायकतया कार्यप्रतिपत्तावेव व्याप्रियन्ते ।

मंत्रापि कार्यांगभूतार्थस्मारकतया तत्रैव नियुक्ताः कार्य एव व्यापारवंतः ।

अर्थवादा अपि तत्रैव रुचिमुत्पादयंतः उपयुज्यंते ।

इति कृत्स्न एव वेदः कार्ये प्रमाणम् । कार्यं च कृतिसाध्यत्वेसति कृत्युद्देश्यं । कृतिश्च प्रयत्नः । तच्च लोके भावनार्थो वेदेत्वपूर्वम् । अतएव वेदान्तानामपिकर्तृस्व-रूपप्रतिपादकत्वेन देवताप्रतिपादकत्वेन वाक्यार्थकार्यपरतैव ।

प्रकरणभेदात्तदनंगीकारेऽपि आत्मा ज्ञातव्यः इत्यपुनरावृत्तये सामाम्नातेन विधिनैकवाक्यतामाश्रित्य कार्यपरत्वमेव वर्णनीयम् । तदेवं कार्यान्वित एव स्वार्थे सर्व शब्दानां व्युत्पत्तिदर्शनात् केवलसिद्धार्थे तदभावान्न-सिद्धस्वरूपे विष्णौ वेदस्य प्रतिपादकत्वं संभवतीति ।

एतदसत् । योग्येतरान्वितस्वार्थे व्युत्पत्तिदर्शनात् ।

तथा हि मातुः पितुरंके स्थितं बालमन्यमनस्कं संतमंगुलेप्रसारणादिना स्ववचनं श्रवणाभिमुखं मात्राद्यभिमुखं च विधाय यदाव्युत्पादयिता वाक्यं प्रयुंक्ते । बालक तवेयं माता तवायं पिता अयं ते भ्राता कदलीफलमभ्यवहरतीत्यादि । तदा वृद्धव्यवहारदर्शनं विना तेन निर्देशेनैव तस्य शब्दसमुदायस्य कार्यान्वयरहित एव तस्मिन्नर्थसमुदाये विषयविषयिभावं तावदवगच्छति बालः । इदमनेनायं बोधयतीति ।

पुनरियंते स्वसाऽयंते सखाऽपूपं खादतीति वाक्यांतरेषु शब्दार्थयोरावापोद्धाराभ्यां शब्दविभागादिकमवगत्य मात्रादिपदानां योग्येतरान्विते जनन्यादौ वाचकत्वमाकलयतीति किमनुपपन्नम् ।

लघीयांश्चायमुपायो व्युत्पत्तौ व्यवहारदर्शनात् ।

शश्वद्विस्मरणशीलो बालकः शब्दमनुसंधाय वृद्धस्यानुगामि प्रत्यागमनं स्वानपेक्षितमेव प्रतीक्षत इति गुरुतरेयं कल्पना । पुरोवर्तितेष्विष्टसाधनतयापेक्षितेषु मात्रादिषु श्रूयमाणस्यैव शब्दस्य वाचकत्वं कल्पयतीति लघुतरमेतत्कल्पनम् ।

वर्तमानापदेशेषु व्युत्पन्नो जातु जिज्ञासुः पश्चाद्व्यवहारदर्शनेनान्यत्रापि व्युत्पद्यत एव । प्रथमव्युत्पत्तिरियम् ।

किं च सर्वेषामपि शब्दानां कार्यान्विते स्वार्थे व्युत्पत्तिरित्येकमेव प्रयोजकं तावदंगीकर्तुं शक्यते लिङादीनां हि कार्यमेव स्वार्थः । न च तस्य कार्यस्य कार्यान्तरेणान्वयोऽस्ति । गुणप्रधानभावेन खलु पदार्थानां अन्वयो भवति । कार्यं च प्रधानतया शब्देनैव बोध्यते । तथा च कथं कार्यद्वयस्य युगपद् गुणप्रधानभावः संभवति ।

अतः कार्यस्य कार्यान्वयाभावात् लिङादीनां कार्यमात्रे सिद्धान्विते वा कार्ये व्युत्पत्तिरित्यंगीकार्यम् । गवादिपदानां कार्यान्विते स्वार्थे इति ।

तथा च प्रयोजकद्वैविध्यांगीकारे कथं न कल्पनागौरवम् ।

योग्येतरान्विते स्वार्थे व्युत्पत्तिरित्यंगीकारेत्वेकप्रयोजकलाभाल्लाघवमित्ययमेव पक्षः समाश्रयणीयः ।

ननु कार्यान्वयिनि स्वार्थे व्युत्पत्तिरित्यंगीकारान्न कल्पनागौरवम् । कार्येण सहयोन्वयः तद्वत् कार्यस्य सिद्धस्य चास्तीत्येकप्रयोजकलाभादिति चेत् । मैवम् । कार्येण सह सिद्धस्य योन्वयः सगुणो भाव एव । न च कार्यं प्रति गुणभावः कार्यस्यास्ति । न च गुणे प्रधाने चानुगतमन्वयमात्रं शब्देन बोध्यते । शब्दमात्रमत्रैकं नार्थ इति

यत्किंचिदेतत् ।

एतेन कार्यान्वयान्वयिनि व्युत्पत्तिरित्येकप्रयोजकवर्णनमपि परास्तम् । कार्यपरपदार्थान्विते व्युत्पत्तिरिति चेन्न । अत्राप्येकप्रयोजकासिद्धेः । कार्यपरं यत्पदं तस्य यो अर्थस्तेनान्वित इति ह्यस्यार्थः । तत्र लिंगादीनां कार्यपरत्वं नाम कार्यवाचित्वं गवादिपदानां तु तदुद्देशित्वमात्रमिति द्वैविध्यमेवेति ।

ननु तथापि न केवलसिद्धार्थे वाक्यस्य प्रामाण्यं युज्यते । कार्यबोधमंतरेण नैराकांक्ष्यलक्षणस्य पर्यवसानस्याभावात् । न हि गोऽश्वः पुरुषो हस्तीति वा देवदत्तः पचतीति वा पदजातं पर्यवसितमनुभूयते । किं तु तृप्तिकामौदनं पचेति । पर्यवसानहीनस्य च न्यूनतया वाक्याभासत्वं स्यात् । ततः कार्यपरत्वं सर्वथांगीकार्यमित्येतदपि न युक्तं सिद्धमात्रज्ञापने पर्यवसितत्वाद्वाक्यस्य ।

तथा हि । यो बाल्ये एव कुतश्चित्कारणान्मातापितृभ्यां वियुक्तो मातापितृमतोऽन्यानवलोक्य स्वात्मनोऽपि तथाभावमनुमाय का मे माता को मे पिता कीदृशौ कुत्र वर्तेतेत्युत्कंठते । अथ तं प्रति कश्चित् ब्रवीति । अयं ते पिता यः पाटलीपुत्रे राजास्ति भद्रसेनः इयं च ते माता या भद्रसेनस्य महिषी लीलावती इति । तदा कार्योपदेशमंतरेण

सिद्धस्यैव ज्ञापनेन तद्वाक्यं पर्यवसितं भवति श्रोतृनिराकांक्षत्वात् ।

तदनंतरं सयदिकथंतौ पश्येयमिति जिज्ञासते तदा तद्दर्शनकामः त्वमेवमनेनपथा पाटलीपुत्रं याहीति कार्यं बोधयति ।

तथा च यः स्वमुखमपश्यन् अन्यान्स्वरूपान्विरूपं-श्चावलोक्य स्वात्मानं संदिग्धे किमहं स्वरूपो विरूपो वेति । तदा तं प्रति कश्चिदाचष्टे सुरूपोसीति । तदपि वाक्यं सिद्धमात्रज्ञापनेन पर्यवस्यति । ततः परं आकांक्षाविच्छेदात् ।

तस्मादिष्टसाधनताज्ञापनमेव वाक्यपर्यवसानहेतुः । न कार्यबोधनमेवेति नियमः । कार्यबोधने पर्यवसानस्यापि इदमेव निमित्तं यदिष्टसाधनताबोधनमिति ।

एवमेववेदवाक्यानां योजनां सूचयति । यो हि सात्विकप्रकृतिः लोकप्रवादात्कार्यत्वादि लिंगानुसंधानाद्वा स्वतनुभवनादेः कर्तारं सामान्यतो जानन् स्नेहमाहात्म्यज्ञानाभ्यां तद्विशेषज्ञानार्थमुक्तकण्ठितमानसः तत्संस्कारवशाच्चान्यदगणयन् वर्तते तं प्रत्याप्तो बंधुरिवायं वेदः तत्स्वरूपं स्वप्रधानमेव प्रतिपादयति "विज्ञानमानंदं ब्रह्म"त्यादि । ततो वाक्यार्थ-ज्ञानादवाप्तपरमानंदः तत्साक्षात्कारं कामयते तं प्रति

तदुपासना विधीयते । सा च प्रक्षीणांतःकरणमलस्यैव संभवतीति तदर्थकर्मविधयः प्रवर्तंते ।

इत्येवं समस्तोपि वेदः परमेश्वरस्वरूपज्ञापन एव पर्यवसितः ।

अथवा शरीरेंद्रियान्तःकरणादिसन्निधानेन स्वात्मनो विविधदुःखं पश्यन्निरुत्कटकं च सुखमलभमानोयं संशेते । किं ममेदं दुःखादिकं शरीरादिसंबंधनिमित्तमेवोतस्वाभाविकमिति । तं प्रति वेदः प्रवर्तते । 'तत्वमसी'त्यादिः । परमात्मैव निर्दुःखपरमानंदस्वभाव एव त्वमसि किं त्वीश्वराधीनाविद्याद्युपस्थापितशरीरादिनिमित्तेनान्यथारूपेणोपेत इति ।

ततः पुनरसौ जिज्ञासते केनोपायेनाहमिदमस्वाभाविकं रूपं हित्वा स्वरूपेणावस्थितस्यामिति । तं प्रति परमेश्वर एव प्रसन्नस्तदुपाय इति तत्स्वरूपं निरूप्यते । ततः कथमसौ प्रसीदतीत्यपेक्षायां तत्साक्षात्कारः तदर्थं श्रवणादिकं तदंगतया कर्माणि च विधीयंत इत्येवं समस्तस्यापि वेदस्य परमेश्वरस्वरूप एव पर्यवसानमिति ।

एतच्चान्यार्थं तत् जैमिनिरित्यादिना सूत्रकृतैवोक्तम् ।

ननु तथापि केवलसिद्धपरत्वे वाक्यस्यानुवादकत्वेनाप्रामाण्यं स्यात् । तत्सर्वथा कार्यपरता स्वीकार्या । कार्यस्य

च प्रमाणांतरागोचरत्वेन नानुवादकत्वप्रसंग इति चेन्न । केवलसिद्धार्थे यथावस्थितार्थबोधकत्वमनुभूयते प्रत्यक्षादेरिव । अस्ति चासावर्थोयः सिद्धोपि प्रमाणांतरेण विदितपूर्वः । ततः सिद्धार्थएवेयंमातेत्यादिवाक्यस्यानुवादकत्वमप्यनुभूयत एव । अतः केवलसिद्धेर्थे वाक्यस्य नाप्रामाण्यमिति किं कार्यपरत्वाग्रहेण ।

स्यादेतत् । यद्यपि बोधकत्वेनैव प्रमाणानां प्रामाण्यम् । तथापि वाक्यप्रयोगस्य परार्थत्वात् प्रयोजनांगमेव वाक्यं प्रामाण्यमश्नुते । यथा अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादिनान्यत् यथाष्टौ काकस्यदन्ता इति । यत्कार्यपरं तदेव परप्रयोजनांगं ततः कथं केवलसिद्धेर्थे वाक्यस्य प्रामाण्यमिति ।

अत्रोत्तरम् । वाक्यं हि प्रमाणम् । तच्च प्रमासाधनम् । प्रमा च यथार्थज्ञानम् । अतस्तस्य परज्ञापनमेव प्रयोजनम् । छिदासाधनस्य परशोः छिदेव । न हि तत्साधनस्य ततोऽन्यत् प्रयोजनं दृष्टम् । तच्च प्रयोजनं सिद्धविषयस्याप्यस्तीति कथं प्रामाण्यानुपपत्तिरिति ।

सत्यमेतत् । ज्ञापनमेवसाक्षाद्वाक्यस्य प्रयोजनम् । तथापि स एवार्थो वाक्येन ज्ञापनीयो यद् ज्ञानं परस्य क्वचित्प्रवृत्तिं वा । कुतश्चिन्निवृत्तिं वा कुर्यात् । परप्रवृ–

त्तिनिवृत्त्यभिप्रायेण वाक्यप्रयोगात् । प्रवृत्त्यादिकारणं च कार्यज्ञानमेव न केवलसिद्धज्ञानम् ।

न च वाच्यं शब्दस्तद्व्यापारो वा प्रवर्तक इति । तथा सति तच्छ्राविणां सर्वेषामपि प्रवृत्तिनिवृत्तिप्रसंगात् । बालस्य स्तनपानादि प्रवृत्त्यादौ शब्दाद्यभावाच्च ।

यापीयं शंखादिशब्दश्रवणानंतरं प्रवृत्तिनिवृत्तिर्वा सापि पुरुषाभिप्रायानुमानादेव न साक्षात् । रागद्वेषयोः यद्यपि प्रवर्तकत्वमस्ति । तथापि सत्तयैव न तु ज्ञाततया । ज्ञानं त्वबुभुत्सितग्राह्यतयाऽवर्जनीयसन्निधिः । अतो वाक्यबोधं प्रवृत्त्यादिकारणं कार्यमेवेति तदेव सर्वत्र कार्यार्थतयांगीकार्यम् । अत एव लिङादिरहिते वाक्ये कार्याध्याहारो न लक्षणा वा श्रयणीया । तत्कथं सिद्धमात्रपरत्वं वाक्यस्येति । नायमस्ति नियमो यत्प्रवृत्त्याद्यर्थ एव वाक्यप्रयोग इति ।

यत्र वाक्यार्थज्ञानमात्रेण सुखदुःखावाप्तिहानी भवतः तत्र प्रवृत्त्याद्यभावात् । यत्रापि प्रवृत्तिनिवृत्त्याद्यभिप्रायेण वाक्यप्रयोगस्तत्रापि सिद्धपरत्वं युक्तम् ।

यद्यपि सिद्धमात्रज्ञानं न प्रवृत्त्यादिहेतुः । तथापि सिद्धविशेषेष्टानिष्टसाधनत्वज्ञानं तु भवत्येव । यतो बालोपि स्तनपानादेरिष्टसाधनतामेव ज्ञात्वा प्रवर्तते । तथा दंशमा

कदशनादेरनिष्टसाधनतामेव ज्ञात्वा निवर्तते ।

तस्यापि कार्यताज्ञानादेव प्रवृत्तिरिष्टसाधनताज्ञानं तु कार्यताज्ञानस्य कारणमिति चेन्न । इष्टसाधनतातिरिक्तकार्यतायां प्रमाणाभावात् ।

चंक्रमण्डनादावस्तीष्टसाधनताबुद्धिर्न कार्यताबुद्धिरिति चेत् सत्यम् । कृतिसाध्येष्टसाधनतायाः कार्यतापर्यायतयाऽङ्गीकारात् अत एव न भूतादौ प्रवृत्तिप्रसंगः ।

एतेन वृद्धव्यवहारदर्शनेन या व्युत्पत्तिः सापि सिद्धविषयैवेति सिद्धम् । बालेन हि स्वप्रवृत्तौ यत्प्रवर्तकेनावगतं तदेव वृद्धप्रवृत्तावपि कल्पयितुमुचितम् । स्वप्रवृत्तौ चेष्टसाधनताज्ञानमेव प्रवर्तकतयाऽवधारितमित्युक्तम् ।

यत एवं सिद्धज्ञानस्यैवसर्वप्रवर्तकत्वं व्युत्पत्तिश्च सिद्धविषयैव अतो न केवलमिदं मातेत्यादीनां किं तु सर्ववाक्यानां लिंगादियुक्तानामपि सिद्ध एव प्रामाण्यं सिद्धम् । प्रसिद्धं च व्याकरणनिरुक्तनिघंटुप्रभृतीनां सिद्धप्रामाण्यं सर्ववादिनाम् । अत्रापि एकः शब्दः सम्यग्ज्ञातः सुष्टु प्रयुक्तः शास्त्रान्वितः स्वर्गलोके कामधुग्भवतीत्यर्थवादबलाद्विधिः कल्प्यत इति चेन्न । इष्टसाधनताज्ञानादेव प्रवृत्त्युपपत्तौ तत्कल्पकाभावात् । अपर आह । व्याकरणादेः प्रामाण्यमेव

नास्ति निर्मूलत्वात् । प्रयोजनाभावाच्च । शब्दज्ञानस्य लोकप्रयोगादेव सिद्धेः वेदरक्षादेश्च शुद्धसंप्रदायादेवोपपत्तेः तत्कथं तदुदाह्रियत इति ।

एतदप्ययुक्तम् । व्याकरणादि प्रामाण्यानंगीकारे सुशब्दापशब्द सम्यक् परिज्ञानानुपपत्तेः ।

तथा च शब्दव्यवहारलोपः । लोके हि गोशब्दवत् गाव्यादयोऽपि सास्नादिमतिपिंडे प्रयुज्यन्ते । ततस्तेषामपि तद्वत्प्रयोगप्रसंगे दुष्यति चापशब्दैः इति वचनात् प्रत्यवायः स्यात् । अत एव सुशब्दापशब्दविभागो नास्ति इत्यपि निरस्तम् । तदभावे फलभेदकथनानुपपत्तेः । अत एवेष्टकादिस्मृतिवन्मूलमपि तस्य कल्पनीयम् । प्रमादपरिहारार्थत्वेन वेदरक्षादिकमपि सिद्धमिति । अतोहरावेव सकलसमागमानां प्रामाण्यम् । उक्तं च नारदीये । सर्वज्ञं सर्वकर्तारं नारायणमनामयम् । सर्वोत्तमं ज्ञापयंति महत्तात्पर्यमत्र हि । सर्वेषामपि वेदानां इतिहासपुराणयोः । प्रमाणानां च सर्वेषां तदर्थं चान्यदुच्यते इति । ज्ञापयंति वेदाः महातात्पर्यमित्यनेन धर्मादिष्वांतरतात्पर्यमित्यर्थः ।

न च जीवब्रह्माभेदे तात्पर्यमागमस्य तत्र प्रमाणाभावात् ।

ननु कथं प्रमाणं नास्ति । 'तत्त्वमसी'त्यादिवाक्यानां विद्यमानत्वादिति चेन्न । द्वे ब्रह्मणी वेदितव्ये । द्वा सुपर्णेत्यादि वेदवाक्यविरुद्धत्वेन तेषामभेदे प्रामाण्याभावात् ।

ननु प्रत्यक्षादिसिद्धभेदानुवादकानां वाक्यानां दुर्बलत्वात्कथं तद्विरोधेनाभेदवाक्यानां तत्र प्रामाण्यबाध इति चेन्न । जीवेश्वरभेदस्य प्रमाणांतराप्राप्तत्वेन भेदवाक्यानां अनुवादकत्वाभावात् । आगमं विना ईश्वरस्यैवासिद्धेः । भेदस्तावद्धर्मिप्रतियोगिप्रतीतिसापेक्षप्रतीतिकः । तत्रेश्वरधर्मिको जीवप्रतियोगिको भेदः प्रमाणांतरसिद्ध इति वा वक्तव्यम् ईश्वरप्रतियोगिको जीवधर्मिक इति वा । पक्षद्वयेऽपि जीवेश्वरप्रतीत्यावश्यं भवितव्यम् । तत्र यद्यपि जीवः साक्षिप्रत्यक्षसिद्धस्तथापि ईश्वरसिद्धिः किमागमेन उत प्रमाणांतरेणेति वाच्यम् । आद्ये तद्भेदप्रतिपादकानां वाक्यानां नानुवादकत्वम् । द्वितीयेपि किं प्रत्यक्षेण वोतानुमानेन ।

नाद्यः । तदगोचरत्वात् । द्वितीये किं प्रत्यक्षागमसहायवतानुमानेन ईश्वरसिद्धिरुच्यते । उत तद्रहितेन । न द्वितीयः । विपर्ययेणाप्यनुमातुं शक्यत्वात् । तथाहि । विमतं सकर्तृकं कार्यत्वात् घटवदिति । सर्वं सकर्तृकमित्युक्ते गगनादौ बाधः । घटादौ सिद्धसाधनं च स्यात् । तन्निवृत्त्यर्थं विमतमित्युक्तम् । तेन विकर्तृकत्वेन सकर्तृकत्वेन

वा यत्र वादिप्रतिवादिनोः संमतिर्गगनादौ घटादौ च ततोऽन्यदंकुरादीत्यर्थः । सकर्तृकमुपादानादिविषयकबुद्धिमत्पूर्वकम् । कार्यत्वात् अभूत्वा भावित्वात् । विमतं विकर्तृकं शरीरादिमदजन्यत्वात् । आत्मवत् । विशेषणवैयर्थ्यमिति चेन्न । पक्षधर्मतासिध्यर्थत्वात् । परैरपि चक्षुस्तैजसं रूपादिषु पंचसु मध्ये रूपस्यैव ग्राहकत्वात् । प्रामाण्यं परतो ज्ञायते अनभ्यासपशायां सांशयिकत्वादित्यादौ पक्षधर्मता सिध्यर्थत्वेन विशेषणस्य प्रयुक्तत्वात् ।

प्रतिपक्षानुमाने अकार्यत्वमुपाधिरिति चेन्न । शरीरिजन्यत्वस्येतरत्वोपाधित्वात् । यत्र सकर्तृकत्वं तत्र शरीरिजन्यत्वमिति साध्यव्यापकत्वात् । कार्यत्ववतोऽप्यंकुरादेः व्यावृत्तत्वेन साधनाव्यापकत्वाच्च भवत्युपाधिः । शरीरविशेषणं व्यर्थमिति चेत् । अकार्यत्वमपि कार्यान्यत्वं कार्यत्वरहितत्वं वा वक्तव्यम् । तत्रान्यत्वादेरेव साध्यव्यापकत्वसंभवात् समव्यापेक्षानपेक्षितत्वात् विशेषणवैयर्थ्यमेव । तत्र पक्षव्यावृत्त्यर्थं विशेषणमिति चेन्न । तदभावात् कर्त्रभावे कार्यं न स्यादिति चेन्न । कारणाभावप्रयुक्तत्वात्कार्याभावस्य कार्यसामान्यं हि कारणसामान्यायत्तम् । अन्यथा कर्मादिकारकविशेषाभावेनासनाशयनादिकार्यभावप्रसंगः । कर्मादिकं न सार्वत्रिकं कर्ता तु सार्वत्रिक इति चेन्न । तत्सिध्यर्थत्वादेवास्य परकीयप्रयासस्य । यद्यपि प्रतिपक्षेनोपाध्युद्भावनमुचितम् । उपाधेः

प्रतिपक्षोन्नायकत्वेन वैय्यर्थ्यात् । तथाप्यभ्युपगमवादोयमित्यदोषः ।

ननु शरीरप्रेरणायाः सकर्तृकत्वेऽपि शरीरिजन्यत्वं नास्ति । कर्मभूतस्य शरीरस्य कर्तरि प्रवेशानुपपत्तेः । ततः साध्यव्यापकत्वमिति । उच्यते । शरीरप्रेरणं हि शरीरक्रियानुगुणप्रयत्नवत्त्वम् । न चाशरीरस्य प्रयत्नोत्पत्तिरस्तीति । किं चागमानपेक्षानुमानपक्षेऽनुपलब्धप्राक्कोटिषु पर्वतादिषु कार्यत्वं कुतः सिद्धम् । सावयवत्वादिति चेत् । किमिदं सावयवत्वम् । अवयवसंबंधित्वं वा अवयवसमवेतत्वं वा सावयवसमवेतत्वं वा द्रव्याश्रितद्रव्यत्वं वा मध्यमपरिमाणत्वं वा ।

नाद्यः । पटावयवतंतुसंयुक्ताकाशे व्यभिचारात् । न द्वितीयः । जात्यादावनैकांत्यात् । तृतीये तु सावयवसमवेतत्वं नाम स्वसमवायिकारणसमवेतत्वमिति युक्तं स्यात्तथा च कार्यमनभ्युपगच्छतः तस्यासिद्धत्वात् । न चतुर्थः । वारि निहिते पार्थिवपरमाणौ व्यभिचारात् । न पंचमः । द्व्यणुकसमवेते परमाणौ व्यभिचारत्वात् । द्व्यणुकं परमाणुसमवेतं न परमाणुर्द्व्यणुकसमवेत इति चेन्न । समवायवत्त्वातिरिक्तस्य समवेतत्वस्याभावात् । अस्य चोभयत्रसाम्यात् । न षष्ठः । ऊर्ध्वाधरीभावादेः असंभवेन समवायातिरिक्ता–

श्रयाश्रयीभावानिरूपणात् । व्यवहारमात्रं तु न व्यवस्थितम् । पटे तंतव इत्यादेरपिदर्शनात् । नान्त्यः । तस्याकार्यत्वेप्यनुपपत्यभावे नाप्रयोजकत्वादिति । तदेवमीश्वरस्यैवासिद्धेः तद्भेदस्य प्रत्यक्षानुमानाभ्यां सुतरामसिद्धिरिति न भेदवाक्यानां अनुवादकत्वमिति । किं च येन भेदवाक्यानां अनुवादकत्वमुच्यते तेनावश्यं भेदस्य प्रत्यक्षानुमानसिद्धत्वं वाच्यम् । असिद्धस्यानुवदितुमशक्यत्वात् । तथा च तिष्ठंतु तावत् भेदवाक्यानि । भेदग्राहकप्रत्यक्षादिविरोधादेवाप्रामाण्यमभेदाऽऽगमस्यापरिहार्यम् ।

नन्वपौरुषेयत्वेनानाशंकितदोषत्वादागमः प्रबलः । प्रत्यक्षानुमाने तु दोषशंकाकलंकितत्वात् दुर्बले । तत्कथं तद्विरोधेन प्रबलस्याभेदागमस्याप्रामाण्यप्राप्तिरिति ।

उच्यते । यद्यागमस्य प्रबलत्वात् दुर्बलप्रत्यक्षादिविरोधेनापि नाप्रामाण्यम् । तर्हि भेदवाक्यानामपि वेदत्वेन बलवत्वात् दुर्बलप्रत्यक्षादिप्रतिपन्नभेदप्रतिपादकत्वेऽपि नानुवादकत्वम् ।

न तावत्पूर्वप्रवृत्तप्रमाणावच्छिन्नविषयत्वमनुवादकत्वं भेदवाक्यानामस्ति । तथानुपलंभात् । तथात्वे ह्यर्थासंस्पर्शितया दौर्बल्यं स्यात् । ततः प्रतिपन्नार्थप्रतिपादकत्वमात्रमनुवादकत्वमिति वक्तव्यम् । तस्यापि परानपेक्षस्वकारणाऽयत्तस्य

वैय्यर्थ्यमेवानुवादकत्वे बीजमंगीकार्यम् । न च तत्प्रकृतेस्ति । दुर्बलाभ्यां प्रत्यक्षानुमानाभ्यां प्रतिपन्नेऽपि भेदे साशंके सति तत्रैव प्रवृत्तानां प्रबलानां भेदवाक्यानां निःशंकभेदप्राप्तिहेतुत्वेन सार्थकत्वात् । तथाचाननुवादक तद्विरोधेनाभेदाऽऽगमस्याप्रामाण्यं तदवस्थितमिति ।

यद्यपि प्रत्यक्षानुमानाभ्यां आगमस्य प्राबल्यमित्युत्सर्गः । तथापि यत्र प्रत्यक्षानुमानयोः आगमं प्रत्युपजीव्यत्वं तयोरेव ततो बलवत्वं तत एव तद्विरोधे तस्य न प्रामाण्यमिति तावदंगीकार्यम् । कुत इति चेदुच्यते । उपजीव्योपजीवकयोः विरोधेन तावदुभयं प्रमाणं वस्तुनो द्वैरूप्यापातात् । नाप्युभयप्रमाणं वस्तुनो निस्वभावत्वाऽऽपत्तेः । ततोऽन्यतरस्यैवाप्रामाण्येऽवश्यमंगीकार्ये । न तावदुपजीवकविरोधेन उपजीव्यस्याप्रामाण्यमंगीकर्तुमुचितम् । येन हि यस्य विषयः सिध्यति तत्तस्योपजीव्यम् । यथा पर्वतग्राहकं धूमानुमानस्य । तथा चोपजीवकविरोधेनोपजीव्यस्याप्रामाण्ये सत्युपजीवकस्य विषयो न सिध्येत् । विषयाभावे सोदयाभावेनाबोधकत्वलक्षणमप्रामाण्यं प्राप्नोति । यस्त्वयं नोदेतुमलं नापि बोधयितुं कथं तदुपजीव्यमप्रमाणीकुर्यात् । अतः परिशेषात् अनपेक्षतया प्रबलस्योपजीव्यस्य विरोधेन सापेक्षतया दुर्बलमुपजीवकमेवाप्रमाणं भवतीति सिध्यति । तथा चात्रापि भेदवाक्यानां अनुवादकत्वसिध्यर्थं परोपन्यस्तेनानुमानादिना भेदागमस्यापि

विषयः सिध्यति ।

तथाहि । जीवं विषयीकृत्य तस्येश्वरेणाभेदो वा बोधनीयः । 'तत्वमसी'ति ईश्वरं विषयीकृत्य वा तस्य जीवाभेदः । 'क्षेत्रज्ञं मां चापि विद्धी'ति । उभावपि विषयीकृत्याभेदमात्रं वा "नेहनानास्ती"ति । सर्वथा जीवेश्वरसिध्या भवितव्यम् । तत्रेश्वरः कार्यत्वाद्यनुमानसिद्धः जीवश्च प्रत्यक्षसिद्ध इति प्रत्यक्षानुमाने तत्वमस्याद्यागमस्योपजीव्ये । भेदवाक्यानां अनुवादित्वसिध्यर्थं परेणानुमानस्येश्वरसाधनायोपन्यस्तत्वात् । अतोपजीव्यत्वेन प्रबलयोः प्रत्यक्षानुमानयोः विरोधेसत्यभेदागमस्य प्रामाण्यं न स्यात् ।

भवतु प्रत्यक्षादिकमभेदागमस्योपजीव्यम् । किं तु तद्विरोधस्तु नास्ति । न हि प्रत्यक्षं जीवं ईश्वराद्भिन्नत्वेन गृण्हाति । नाप्यनुमानं ईश्वरं जीवात्, येन तद्विरोधः स्यात् । किंनाम तत्स्वरूपमात्रम् । तथाभूते एवात्रोपजीव्ये । तत्कथं अभेदागमस्य तद्विरोधेनाप्रामाण्यमिति ।

यदुच्यते यद्यप्यन्यान्यानपेक्षे प्रत्यक्षानुमानेन जीवेश्वरभेदं गोचरयतः तथापि कार्यत्वाद्यनुमानेन सर्वकर्तृकत्वादिलक्षणमीश्वरं ज्ञातवंतः । साक्षिणा च तद्विरुद्धस्वभावमात्मानमनुभवतः ततो भेदज्ञानमवर्जनीयमेवेति ।

आगम एवेश्वरं गृण्हन् । उपजीव्यो नानुमानमिति

चेन्न । तत्रापि 'यः सर्वज्ञ' इत्यादेः अनुमानतुल्यत्वात् ।

किं च नेहनानास्तीत्यैक्यागमेन हि स्वप्रभृतेर्भेदप्रपंचस्य मिथ्यात्वमुच्यते । तत्र चागमादिस्वरूपग्राहकं प्रत्यक्षादिकमुपजीव्यमिति तद्विरोधेन तस्याप्रामाण्यमिति । सर्वैरात्मन्यस्य सर्वकर्तृत्वादेरनुभूयमानत्वात् । जगत्कारणादीश्वराद्भेदः सिद्धः । तथा च साक्ष्यनुभवविरोधेनैक्यागमस्याप्रामाण्यमंगीकार्यम् ।

ऐक्यागमविरोधादनुभवस्यैवाप्रामाण्यमस्त्विति चेत् । जीवेश्वरभेदविषये अनुभवस्याप्रामाण्ये अभेदागमप्रामाण्यविषयेऽपि तत्प्रामाण्यस्यापि अविश्वसनीयत्वापातात् । ततश्चैक्यागमप्रामाण्यं न सिध्येत् । न चासिद्धप्रामाण्यमन्यत् प्रमाणीकर्तुं प्रभवतीत्यतः परिशेषात्साक्ष्यनुभवविरोधिनोऽभेदागमस्यैवाप्रामाण्यमुचितम् । साक्ष्यनुभवस्य सर्वप्रमाणप्रामाण्यनिश्चायकत्वात् ।

अत्राव्यभिचारितत्वनियमः साक्ष्यनुभवस्य प्राबल्यहेतुः । एवमुपजीव्यत्वनिरवकाशत्वलक्षणस्वभावबलवत्प्रमाणबाधितत्वादैक्यागमस्याप्रामाण्यमित्युक्तम् ।

न केवलमेतावत् । किंतु बहुत्वलक्षणबलवद्भिरेतैरेव प्रमाणैर्बाधितत्वाच्च ।

ननु बहूनि प्रमाणान्येकविषयाणि वा भिन्नविषयाणि

सिभङ्ग इति चेत् ।

किमत्रात्मनि देहारोपो देहे वा आत्मारोपः, उत भिन्नयोः देहात्मनोरभेदारोपः ।

न प्रथमद्वितीयौ । देहात्मनोः प्रतीतिकत्वप्रसंगात् । देहाद्यन्तराभावात् । न तृतीयः । आविपालगोपालं देहात्मभेदज्ञानसद्भावस्यान्यत्रोपपादितत्वात् । कथं तर्हि मनुष्योऽहमित्यादिव्यवहार इति चेत् उपचारेणेति ब्रूमः उपचारे किं निमित्तमित्यत आह । यथा वस्तुनो भिन्नयोस्तन्तुपटयोरेकदेशस्थितत्वं तद्दर्शनेऽपि स्फुटतरविवेकाभावश्चास्ति । तथा देहात्मनोरप्येकदेशस्थत्वादिसादृश्येनायं व्यवहारः । ततो भ्रान्तेरभावात् नात्रोक्तव्याप्तेर्भंगः शंकनीय इति । स्फुटभेदज्ञानाभावादेव संसारोपपत्तिः ।

( ७८६ – २५ ) किं च स्फुटभेदज्ञानेऽपि पुत्रादाविव स्नेहादिवशात् रागादिकं संभवत्येव । पुराणवाक्यमपि स्फुटभेदप्रतिभासाभावविषयमिति । ननु शंखः पीतो नभो नीलं तिक्तो गुडः इत्यादिष्वपि पीतत्वादयोऽन्यत्र विद्यन्त एव । पीतसादृश्यं च द्रव्यत्वादिकं किंचिच्छंखादीनां पीतादीनां चास्त्येव । अतो न कुत्रापि सदृशः तथा वस्तुद्वयं विना भ्रमः ।

( ७९६ – २९ ) ननु द्रव्यत्वादिसादृश्येन भ्रान्त्यु-

त्पादेऽतिप्रसंगः स्यादिति चेन्न, सोपाधिकभ्रमेष्वल्पस्यापि सादृश्यस्य भ्रमहेतुत्वोपपत्तेः । यथा जलप्रवाहगते दण्डे व्यक्तिभ्रमः, चक्षुर्गतपित्तपीतिमात्रप्रयुक्तो हि पीतशंखभ्रमः, गोलकगतकाष्ण्योपाधिकः सान्निध्यसिद्धे नभसि नीलभ्रमः । जिह्वागतपित्ततिक्तता निमित्तो गुडतिक्तताभ्रमः । देहात्मनोस्तु भ्रम एव नास्ति । पीतशंखादिभ्रमः सोपाधिकः । शुक्तिरजतादिभ्रमस्तु निरुपाधिकः । परेणाप्येषा व्याप्तिरङ्गीकृतैव यदभाषत । स्मृतिरूपः परत्र पूर्वदृष्टावभासोऽध्यास इति ।

अत्र हि स्मृतिरूपपदेन सादृश्यमङ्गीकृतम् । परत्रेत्यधिष्ठानम् । पूर्वदृष्टेति प्रधानम् । अत एव केशोण्डूकादिभ्रमस्य निराधिष्ठानत्वमाशंक्य तेजोंऽशाधिष्ठानत्वेन समाधानं कृतम् । बालस्य गुडतिक्तताभ्रमे प्रधानभावमाशंक्य जन्मान्तरानुभूतत्वोपपादनेन परिहार उक्तः । तथापि शिष्यव्युत्पादनार्थं आचार्येण इदं व्याप्त्युपपादनं कृतम् न परं प्रतीत्यदोषः ।

आत्मानात्मनोः इतरेतराध्यासः तैरंगीकृतः । तत्र अनात्मन्यात्मभ्रमकल्पनेनात्मनः सत्यत्वं स्यात् ।

(८०९ – ५) किञ्च एकस्मिन्नात्मनि सर्वं जगत् कल्पितं न भवति युगपत् बहुधा दृश्यमानत्वात् । आत्मा वा युगपत् बहुधा दृश्यमानस्याधिष्ठानं न भवति । एक-

त्वादित्यनुमानद्वयस्य व्याप्तिमुपादयति न चेति । न चैकमेव युगपद्बहुधा दृश्यते भ्रान्तौ । ननु आत्मा एकविध एव जगत्तु बहुविधं प्रतीयताम् । तदपि आत्मनि आरोपो घटत इति चेत्, किमात्मनि धर्मित्वेन उत धर्मत्वेन । पक्षद्वयमप्यनुपपन्नमित्याह । न चेति ।

न हि कश्चित् । अहं भेद इति वा भिन्न इति वा भ्रान्तो दृश्यते अनुपलम्भात् । व्याप्तात्मनि जगदारोप इति चेन्न, व्याप्तात्मस्वरूपानुविद्धतया घटादीनां प्रतीत्यभावात् । आरोपितस्य च अधिष्ठानानुविद्धतया प्रतीतिनियमात् । न हि कश्चित् इदं शुक्लभास्वरं रजतमितिवत् इदं आत्मस्वरूपं घट इति प्रत्येति ।

( ८१२ – १३ ) ननु सन्घटः प्रकाश्यते घट इति सत्प्रकाशसंभिन्नतया घटः प्रतीयते । सत्प्रकाशात्मकश्चात्मेति कथं आत्मानुविद्धतया घटादिप्रतीत्यभावः । असाधारणाकारानुवेधस्तु रजतादिविभ्रमेऽपि नास्तीति चेन्न ।

अनित्यमिदं कृष्णमिदमिति प्रतीतेरनित्यादिरूपस्याधिष्ठानत्वप्रसक्तेः । घटधर्म एवासौ नाधिष्ठानानुवेध इति चेत् तर्हि सत्तादिकमपि किं न स्यात् ।

अस्य पृथक्सत्ताभावादिति चेन्न । अन्योन्याश्रयप्रसंगात् । सिद्धे हि आरोपितत्वे पृथक्सत्ताभावसिद्धिः ।

ततश्च अधिष्ठानानुवेधसम्भवेन आरोपितत्वसिद्धिः । (७१३–१)

यदप्युक्तं उपाधिकृतभेदेनात्मस्वरूपस्यापि भिन्नत्वात् बहुविधप्रपञ्चारोपाधिष्ठानत्वं युक्तमिति । तत्र वक्तव्यम् ।

किमुपाधयः सत्या उत मिथ्येति । नाद्यः अपसिद्धान्तापातात् । न द्वितीयः । अर्थक्रियाकारित्वाभावप्रसंगात् । शशविषाणादेः कार्यकारित्वादर्शनात् । भेदोऽपि मिथ्येति चेत् तथाप्यनुपपत्तिः । मिथ्याभूतस्यापि आकाशभेदस्य घटाद्युपाध्यभावे प्रतीत्यभावात् उपाधयोऽप्यारोपिताः सत्या एव न तु शशविषाणादिता चेत् कथं तर्हि ते बहुविधास्तादृशात्मन्यध्यस्येरन् । तदर्थं पुनरुपाध्यन्तरकृताभेदकल्पने अनवस्था स्यादिति ।

यच्चोक्तं पूर्वं संगदुत्तरोत्तरारोपे प्रधानमिति । तदपि असत् । आदिसृष्टावनुपपत्तेः । पूर्वकल्पानुभवसंस्कारस्तु अत्राप्यस्तीति चेन्न । तथा सति नारिकेलद्वीपवासिनोऽपि गुञ्जापुञ्जादौ ज्वलनसमारोपप्रसंगात् । न ह्यनादौ संसारे कदापि तेन ज्वलनो नानुभूत इति शक्यते वक्तुम् । प्रमिते हि अनन्यार्थसिद्धे कार्ये जन्मान्तरानुभवस्यापि उपयोगः कल्प्यते । न चेदानीमपि जगदारोपः प्रमितः । अनुमानागमयोः निराकृतत्वात् । अत एव सादृश्यव्युत्पादनमप्यसदिति ।

( ८१६ – १४ ) किञ्च यदज्ञानमधिष्ठानमावृत्यारोपं

उत्पादयति । यच्चारोपितार्थज्ञानं किं तदुभयव्यतिरिक्तं जगत्पक्षीकृत्य दृश्यत्वाद्यनुमानेन एकजीवाज्ञानपरिकल्पितमिति साध्यते । आहोस्वित् तदपि पक्षे निक्षिप्य । न प्रथमः तावताप्यद्वैतासिद्धेः । न हि ज्ञानाज्ञानयोः आत्मस्वरूपत्वं अंगीकृतम् तेन तयोरनारोपितत्वेऽप्यद्वैतं सिध्येत् । यद्यपि आरोपितस्य ज्ञानं साक्षीत्यंगीकृतम् । तथापि तस्यासङ्गत्वादारोपितार्थसम्बन्धासम्भवात् आरोपितार्थे संबंधिरूपेण कल्पितरूपमेवांगीकृतम् । न द्वितीयः । यथा नास्ति अत्र रजतमिति बाधकज्ञानेन रजतस्य कल्पितत्वं दृश्यते । न तथा ज्ञानाज्ञानयोरपि । प्रत्युत एतावन्तं कालं अहमिदं शुक्तिकाशकलं न ज्ञासिषं रजतत्वेनाऽज्ञासिषं चेति शुक्तिकाशकलवत् ज्ञानाज्ञानयोरबाधितत्वेनानुवृत्तिदर्शनात् । अतो बाधितविषया प्रतिज्ञेति ॥ ज्ञानविषयस्य मिथ्यात्वमेव तदप्रामाण्ये मिथ्यात्वव्यपदेशे च कारणम् । न तावत् स्वरूपतो मिथ्यात्वमात्रमप्रामाण्यादि कारणम् ।

( ८१८ – ७ ) किन्तु विषयवैपरीत्यमपि । अन्यथा तत्त्वमस्यादिवाक्यजनितस्य मिथ्याभूतस्य वृत्तिज्ञानस्याप्यप्रामाण्यादि प्रसंगात् । न च विषयान्यथात्वेऽपि स्वरूपमिथ्यात्वाभावेनाप्रमात्वभावो दृष्टः । ततश्च तन्मात्रेणैव तदुपपत्तौ स्वरूपमिथ्यात्वमपि कल्पयतो गौरवं स्यादिति ।

( ८४८ – ७ ) बिम्बप्रतिबिम्बयोर्भेदः स्वाभाविकः ।

तत्र बिम्बसन्निधिरादर्शपरिणतिहेतुरेवं तदपायोऽपि विपरीतपरिणतिहेतुः । विपरीतपरिणतौ च प्रतिबिम्बगर्भितता न स्यत्येव । यथा हि । सुवर्णरजतादीनां मूषाग्निसन्निधाने लब्धद्रवावस्थानां तदपाये पुनर्घनीभावस्तथात्रापि किं न स्यात् । दर्शनानादरे च स्थायित्वमपि कस्य बलेनापद्येत । तस्मात् यथा यथा दर्शन लोके समवाय्यसमवायिनिमित्तनाशः कारणमङ्गीक्रियते, तथा प्रतिबिम्बस्यापि उपाधिबिम्बतसन्निधानाशात् नाशो अंगीकर्तव्यः । तस्मात् बिम्बप्रतिबिम्बयोः प्रतिबिम्बानां च मिथो स्वाभाविकत्वात् नोपाधिकृतत्वम् । न द्वितीयः । तस्य असिद्धत्वात् नेक्षेतोद्यंतमादित्यमित्यादीनां गौणार्थः । मायामयी सृष्टिरपि तत्सदृशस्य अन्यस्य विद्यमानत्व एव दृष्टा । द्व्यत्वादिसादृश्ययुक्तं किंचिदधिष्ठानमाश्रित्यैव च ।

विश्वं नेश्वरमायाकल्पितं तेन दृश्यमानत्वात् । यद्यन्मायाकल्पितं न तत्तेन दृश्यते यथेंद्रजालादिकं मायाविनेति । अथवा नेदं मायामयं मायाविन्नाभिमतेन दृश्यमानत्वादिति प्रयोगः । विवादपदं नारोपितं सर्वात्मना अधिष्ठानापरोक्षज्ञानवता दृश्यमानत्वात् । यदेवं तदेवं । यथोक्तविधया स्तंभविदादृश्यमानो न कुंभस्तत्रारोपितः ।

(८५९ – १) अथवा यन्नैवं तन्नैवम् । यथा शुक्तिकारोपितं रजतशुक्तिदर्शनादृश्यत इति । इदं च दुःखादेरविद्यमानत्वनिरासेऽपि समानम् ।

सत्योपाधिकल्पितबहुजीववादपक्षे दोषाः । ब्रह्मैव ह्युपाधिसंबंधात्संसारीति परस्यामतम् । ( ८६६ – ८ ) अनाद्यनंतं जगदेतदीदृक् प्रवर्तते नात्र विचार्यमस्तीत्यादि श्रुतेः । ततश्च संसारिणां सर्वदा विद्यमानत्वात् सर्वदा ब्रह्मण एव उपाधिसंबंधत्वात् ब्रह्मणः तस्य नित्यसंसारित्वं स्यात् । ततश्च शुद्धवस्तु व्यवस्थाभावः ।

न च शुद्धस्य नोपाधिसंबंध इति वाच्यम् । उपाधिसंबंधस्य उपाधिसंबंधकल्पनेनानवस्थाप्रसंगात् ।

( ८६६ - २६ ) सर्वेप्युपाधयः तत्संबंधाश्चानादय एव तत्कथमनवस्थेति चेत् । तेषां संबंधानां निमित्त-निमित्तिभावोऽस्ति न वा । आद्ये कथं नानवस्था । द्वितीये तु संबंधाः सर्वेऽपि शुद्ध एवेत्यापन्नम् ।

सिद्धविषयत्वान्नानवस्थादोष इति चेन्न । निमित्त-निमित्तिभावावस्थितानां नोपाधिसंबंधसद्भावे प्रमाणाभावेन कल्पनामात्रत्वात् । ( ८६८ - १ ) यो जीवभेदनिमित्तभूत उपाधिसंबंधः तेनैव संबंधेनैव संबद्धस्य स एव संबन्ध इत्यंगीकारे आत्माश्रयत्वप्रसंगात् ।

उत्पत्तिः ज्ञप्त्यप्रतिबन्धकत्वान्नायं दोष इति चेन्न । निमित्तनिमित्तिभावाभ्युपगमात् । अन्यथा शुद्धस्योपाधि-संबन्ध त्यापत्तेः ।

किं च तदुपाधिसंबन्धवति तदुपाधिसंबन्ध इत्यंगीकारे तदुपाधिसंबन्धस्याधारे प्रवेशः आधेयत्वं चांगीकृतम् । तथा च स्वोत्पत्यपेक्षोत्पत्तिवस्त्वज्ञानापेक्षज्ञानवत् स्वस्यैवाधाराधेयत्वेप्यात्माश्रयत्वं भवत्येव । अन्यथा यज्ञदत्तः किमिति न स्वात्मानमारोहेत् ।

केवले स्वस्मिन्नवर्तनाददोष इति चेत् । तर्हि कुंडलिनि स्वस्मिन्स्वयं वर्तेत । रूपविशिष्टे च रूपस्य वृत्तिः स्यात् ।

तथा च न बद्धमुक्तादिव्यवस्थासिद्धिरिति व्यर्थ एव बहुजीवाभ्युपगमः । मिथ्योपाधिकृतभेदपक्षे दोषः । अज्ञानसिद्धौ कल्पितोपाधिसिद्धिः तत्सिद्धौ च भावरूपाज्ञानसिद्धिः मिथ्योपाधिभिन्नस्यैवाज्ञानाश्रयत्वात् । शुद्धब्रह्मैवाज्ञानाश्रयमिति चेत् । तर्हि तस्य स्वरूपातिरिक्तस्याज्ञानसंबन्धे निमित्तस्याभावात् अज्ञानस्य यावत्स्वरूपमवस्थानावश्यंभावात् मुक्तस्याप्यज्ञत्वप्रसक्ति ।

( ८७५ - ६ ) एतेन न ब्रह्मणो नापि जीवस्य अज्ञानम् । किं तु चैतन्यस्वरूपमात्रस्येत्यपि परास्तम् । तस्यापि शुद्धोपहितान्यतरत्वस्यावश्यं वक्तव्यत्वात् ।

( ८७५ - ९ ) किं च यदि केवलस्यैव ब्रह्मणोऽज्ञानं स्यात्तदा निमित्तांतराभावात् । स्वाभाविकमेव तत्स्यात् ।

यच्च तस्य स्वाभाविकमानंदादिकं तत्सत्यं दृष्टमिति अज्ञानमपि स्वाभाविकत्वात्सत्यं स्यात् । ततश्चाज्ञानस्यापि सत्यत्वात् ब्रह्मणः सद्वितीयत्वं प्रसज्येत ।

अज्ञानस्य स्वाभाविकत्वे ज्ञानादिवत्तस्यानिवृत्तिः स्यात् । कारणांतरकल्पनयपि ज्ञानाज्ञानयोः सम एव । अज्ञानसिद्धौ मिथ्योपाधिसिद्धिः । तत्सिद्धौ जीवसिद्धिः जीवसिद्धौ तदाश्रयाज्ञानसिद्धिः इति चक्रकं वा ।

ननु जीवांकुरादाविवात्रापि परिहारः किं न स्यात् उच्यते । ( ८९१ - ५ ) युक्तं बीजांकुरव्यक्तीनां भिन्नत्वा-त्समाधानम् । जीवादेस्त्वेकैकत्वादपरिहार्यमेवान्योन्याश्रयत्वा-दिकम् ।

( ८९६ – २३ ) दूरस्य वृक्षन्ह्रस्वत्वादौ प्रत्यक्षाप-टुत्वस्यैव निश्चितत्वात् युक्त्या दीर्घत्वनिश्चयः ।

( ८९७ – २१ ) प्रत्यक्षस्य रेखोदरेखाद्यविपयीक-रणेनार्थग्राहित्वं परिणामादान्यथात्वं च साक्षिणा निश्चितम् ।

( ८९८ – २९ ) दूरस्थवृक्षह्रस्वत्वादिविपयं च दूरस्थत्वादिदोपयुक्ततन्मंदग्राहि । तत एव परिणामादावयथा-र्थमीत्यन्वयव्यतिरेकानुग्रहीतत्वात्साक्षिणः । ततो ह्रस्वत्वादि ज्ञानबाधितप्रायमेवं ज्ञायते । ततः परं च प्रवर्तमानावनु-मानागमौ तेन दत्तावकाशौ दीर्घत्वादिनिश्चयं कुर्वाणो

तद्बाधका विवोच्यते । अतो नैतत्प्रत्यक्षस्यानुमानागमबाध्यते निदर्शनमिति ।

(९०४ – १०) आत्मा मिथ्यावस्तुत्वात्प्रपंचवत् । आत्मा सत्यः जगन्मिथ्येति कल्पने कल्पनागौरवं स्यात् । परन्यायेन परस्यापादनम् । यद्वा शून्यवादिप्रयुक्तमनुमानं वा ।

(९०४ – १५) नन्वात्मनो वस्तुत्वाभावात् असिद्धो हेतुरिति चेन्न । तथात्वे तद्व्यवहारलोपप्रसंगात् । कल्पित धर्मसद्भावाद्व्यवहारः । सत्यधर्माभावादसिद्धिरिति चेत् तर्हि दृश्यत्वादेरपि सत्यत्वाभावादसिद्धिः स्यात् । वस्तु च मिथ्या चेति विरुद्धमिति चेत् । दृश्यं च मिथ्या चेति कुतो न विरुद्धम् । शुक्तिदर्शनादौ सहदर्शनादिति चेत् समं वस्तुत्वे । वास्तवं वस्तुत्वं तत्र नास्तीति चेत् । दृश्यत्वमपि तथेति समानम् । यादृक्तादृग्दृश्यत्वं तत्रास्तीति चेत् । वस्तुत्वमपि तथाभूतमस्तीति कुतो विरुद्धत्वम् । तत्सत्यमित्यादिश्रुत्या दृश्यत्वानुमानमपि बाधितं व्यावहारिकसत्यत्वपरा श्रुतिरिति चेत् अन्यापि प्रातिभासिकसत्यपरा किं न भवेत् ।

(९९२ – ४) सर्वभ्रमाणां शून्यवादिना निरधिष्ठानत्वेनांगीकृतत्वात् । भ्रमोपपत्यर्थमप्यात्मनः सत्यत्वांगीकारश्च न युज्यते । यदि सर्वेषां जीवानां अभेदः स्यात्तर्हि

देवदत्तशरीराद्यनुग्रहोपघातापिना देवदत्तशरीरे सुखदुःखाद्युत्पत्तौ सत्यां देवदत्त एव सुखी दुःखी वा न यज्ञदत्त इति तथा यज्ञदत्तशरीरे सुखाद्युत्पत्तौ यज्ञदत्त एव सुखादिमान् देवदत्त इति चभोक्तृभेदो न स्यात् । न चापाद्यापादकयोरभेदः ।

( ९१९ – ४ ) स्वरूपाभेदस्यापादकत्वात् । भोक्तृरूपभेदाभावस्यापाद्यत्वात् । तथा सर्वशरीरगतं सुखदुःखादिकं एकेनैव भुज्यते ।

तदयं प्रसंगार्थः । यदि देवदत्तशरीराधिष्ठाता जीवो यज्ञदत्तशरीराधिष्ठातृजीवाभिन्नः स्यात्तर्हि यज्ञदत्तशरीरगतसुखाद्यननुसंधाता न स्यात् किं तु तदनुसंधानेनैव स्यात् । यज्ञदत्तशरीराधिष्ठातृजीववत् । न चैवं तस्माद्भिद्यत इति प्रसङ्गविपर्यये पर्यवसानम् ।

एतेन भेदस्यानुसंधानानुसंधानरूपव्यवस्था व्यभिहिता भवति । यथा चैकांगुल्याद्यपगमेऽपि न मुक्तिः । एवमेकोपाध्यपगमेऽपि न मुक्तिः । तस्यैवानंतोपाधिसंबन्धत्वात् । तत्तत्कर्मनिमित्तोपाधिस्तस्येति तत्तदपगमे तस्य तस्य मुक्तिरिति च युक्तम् । कर्मभेदस्याप्युपाधिभेदप्रयुक्तत्वात् । उपाधेश्च कर्मभेदनिबन्धनत्वादन्योन्याश्रयत्वात् ॥ किं चोपाधिरात्मन एकदेशं ग्रसति उत सर्वमात्मानम् । एकदेशांगीकारे सावयवत्वं तस्य चानित्यत्वं च न्यायेनैव प्रसज्येत । यथाहुः ।

कृतसावयवत्वादिप्रयुक्ता हि विनाशितेति ।

( ९३४ – १ ) ननु द्रव्योपादनं द्रव्यमवयव उच्यते। यथा पटस्य तंतवः । ततः सावयवत्वं नामोपादानवत् । तस्यानित्यत्वं सर्वैरंगीकर्तव्यम् । तस्मात्तैरित्यनुपपन्नम् । उच्यते । उपादानव्यतिरिक्तोऽप्येकदेशोऽस्मिन् मतेङ्गीक्रियते । तं तु व्यतिरिक्तवितस्त्यादिपटैकदेशानां दृष्टत्वात् । किं च निरुपादानस्याप्याकाशस्यैकदेशा विद्यन्ते । तदाश्रयेण च संयोगस्य प्रदेशवृत्तित्वं युज्यते । अतो नास्मन्मतेतन्मात्रेण अनित्यत्वं प्रसज्यते । सर्वस्यैकोपाधिग्रस्तत्वे उपाधेर्भेदकत्वं न स्यात् । न हि सर्वस्मिन्पटे महारजतेन लिप्ते भेदबुद्धिरुपपद्यते । तस्याप्यंशस्योपाधिकृतत्वांगीकारे अनवस्था स्यात् ।

ननु च दंडकुंडलाद्युपाधिकृतो भेदो देवदत्तस्य दृश्यते । तत्कथमुपाधिकृतो नास्तीत्युच्यते । नैवम् । ( ९३५ – २४ ) ननु दंडादिना देवदत्तस्य भेदः क्रियते । किं तु दंडादिविशेषणसंबन्धेन देवदत्तो विशिष्टरूपं द्रव्यांतरमुत्पादयति । ( ९३४ – २८ ) व्यावृत्तिरेव वैशिष्ट्यमिति मतेऽपि दंडादिकं प्रकल्पितामेव व्यावृत्तिं बोधयति । न द्रव्यांतरापादनमेव भेदकत्वमत्र विवक्षितं तस्य व्यवस्थानुपयोगित्वात् । किं नाम युगपदनेकहेतुत्वमिति ॥

( ९४४ – १४ ) त्रिस्कंधचैतन्यवादिनां मते ब्रह्मेश्वरजीवव्यवस्थापि न संभवति भेदाभावात् । उपाधिभेदाद्व्यवस्थेति न युक्तम् । देशतः कालतश्च परिच्छिन्नयोरौपाधिकभेदस्य दृष्टत्वात् । उपाधिर्हि भेदकत्वपक्षेऽप्युपहितस्य देशावच्छेदकत्वे न वा भेदं कुर्यात् यथा वस्त्रादेर्महारजनादिः कालावच्छेदकत्वे न वा । यथा यौवनादिकं देहस्य । न चैतदुभयमप्यत्र संभवति । द्वयोः सर्वगतत्वेन च देशतः कालतश्च परिच्छेदाभावात् । न च सर्वगतत्वादौ विवादः । श्रुत्यादि सिद्धत्वात् ।

( ९४८ – २ ) किं च विशिष्टस्य शुद्धस्य वा संसारः । शुद्धस्य संसार इत्युक्ते स्ववचोहतिः । विशिष्टस्येत्युक्ते विशिष्टोऽन्यः स एव वा । स एव चेदुक्तो दोषः अन्यश्चेन्नित्योऽनित्यो वा । अनित्यश्चेत् नाश एव तस्य न मोक्षः । नित्यत्वे च भेदस्य सत्यत्वं मोक्षेऽपि तस्य भावात् । स्वरूपमात्रस्याभेदः भेदस्तु उपाधिकृत एवेत्यंगीकारे स्वरूपमेवोपाधिसंबद्धमिति न तस्य शुद्धत्वम् ।

( ९५६ – १० ) उपाधिकृतभेदवादे किं सर्वे जीवाः सर्वगताः, उत शरीरपरिमाणाः अथाणवः । नाद्यः । अविच्छिन्नस्य सर्वगतत्वानुपपत्तेः तथाविधोपाध्यनुपलब्धेश्च । द्वितीये सावयवत्वेनो नित्यत्वापत्तिः । तृतीये शरीराव्याप्तिः । किं च द्वितीयतृतीययोरुपाधेर्मूर्तत्वेन क्रियावत्त्वात् किं

यत्र यत्रोपाधिर्गच्छति तत्र तत्रोपहितो ब्रह्मांशो जीवोऽपि गच्छति उत पूर्वमुपहितं ब्रह्मांशं विहाय यत्रोपाधिर्गच्छति तत्रैवांशांतरमवच्छिनत्ति । आद्ये उपाधिविभक्तोत्थाने ब्रह्मणः सुशिरत्वं संयुक्तस्थाने द्विगुणत्वं च स्यात् । द्वितीये जीवानामुत्पत्तिनाशप्राप्त्याकृतहान्यकृताभ्यागमप्रसंगः ।

जीवेश्वरयोः यौ स्वाभाविकौ भेदाभेदौ वदति स प्रष्टव्यः। किमर्थमयं भेदोंगीक्रियत इति । ( ९५८ – १८ ) व्यवस्थासिद्ध्यर्थमिति चेत् । अभेदेन सङ्करोऽपाद्यमानः कथं निवार्यते ॥ भेदेनोपरुद्धोऽभेदो न स्वकार्यकारीति चेत् । अभेदोपरुद्धो भेदोऽपि व्यवस्थां न कुर्यात् ॥ भेदः प्रबल इति चेत् तर्हि किमनेनाभेदेनांगीकृतेन ईश्वरस्याचिंत्यशक्तिवशात् सर्वमुपपद्यत इति चेत् । तर्हि ईश्वरे बहुमानवतामुद्धाभेदोऽङ्गीक्रियताम् । श्रुतिस्तं न सहत इति तु प्रत्युक्तम् । एतेन व्यतिरेकपक्षोऽपि निरस्तः । पक्षद्वयोक्तदोषापातादित्यलम् ।

निर्गुणब्रह्मसिद्धिः किं प्रत्यक्षेणानुमानेन वा आगमेन वा ।

न प्रथमद्वितीयौ । नेंद्रियाणि नानुमानं वेदा ह्येनं वेदयन्तीति श्रुतेः ॥ तृतीये पृच्छामः ब्रह्म किं वाक्यार्थः शब्दार्थो वा । नाद्यः । असंसर्गभेदरूपत्वात् । तयोरेव वाक्यार्थत्वात् । द्वितीये किं तत्र वचनवृत्तिरुत लक्षणा

अथ गौणी । आद्येऽपि चतुष्टयी हि वाचकानां शब्दानां गतिः । जातिशब्दा गुणशब्दाः क्रियाशब्दा द्रव्यशब्दाश्चेति । तत्र जातिनिमित्ता शब्दाः यथा ब्राह्मण इति । गुणनिमित्ता यथा । शुक्लो दंडीति । क्रियानिमित्तो यथा पाचक इति । द्रव्यशब्दा यदृच्छानिमित्ता यथा डित्थ इति । तत्र तावदाद्यं प्रकारत्रयं न ब्रह्मणि संभवति । जातिगुणक्रियारहितत्वांगीकारात् वैदिकशब्दानां असांकेतितत्वाच्च चतुर्थोऽपि प्रकारः ॥ ततः सर्वशब्दावाच्यं ब्रह्मेति स्थितम् । अत एव न तत्र पदानां गौणीवृत्तिः तस्या गुणयोगनिमित्तत्वात् । न द्वितीयः । सर्वशब्दावाच्यस्य लक्षणायोगात् । तीरादिशब्देन वाच्यमेव गंगादिपदलक्ष्यं दृष्टं न तु केनापि शब्देनावाच्यत्वात् ब्रह्मणो लक्ष्यत्वमपि दृष्टम् । ( ९६३ – ६ ) तथा चापदार्थत्वादवाक्यार्थत्वाच्च न तस्य श्रुतिगम्यत्वम् । दूरे तत्र तात्पर्यमिति । प्रमाणाधीनत्वाद्वस्तुसिद्धेः । ब्रह्मणस्याज्ञेयत्वात् शून्यत्वप्राप्तिरिति । ज्ञेयत्वांगीकारे जडत्वापातः तथा परेणांगीकृतत्वात् ।

ननु अवाच्यत्वात् ब्रह्मणो यदलक्ष्यत्वमुक्तं तदयुक्तम् । लक्षणायां वाच्यत्वस्योपयोगाभावात् । वाच्यार्थसंबंधित्वेन प्रसिद्धिरेव हि लक्षणायां बीजम् । अस्ति च सा ब्रह्मणि स्वप्रकाशत्वात् । न च विपक्षे बाधकाद्विना व्यभिचारादर्शनेनैव व्याप्तिनिश्चयः । पक्ष एव व्यभिचारः । अतो लक्ष्यत्वसंभवान्न तस्य शास्त्रगम्यत्वाभावः ॥ अत एव न

शून्यत्वमपि । लक्षणासंभवेन शास्त्रसिद्धत्वात् । वस्तुतः सर्वप्रमाणातीतत्वेऽपि स्वप्रकाशतया सिद्धत्वादिति ।

किमिदं स्वप्रकाशत्वम् । किं स्वेन ज्ञेयत्वम् उतान्येनाज्ञेयत्वम् । नाद्यः । कर्तृकर्मभावविरोधेन स्वेन वेद्यत्वानंगीकारात् । द्वितीये प्रमाणाभावादसिद्धौ चोदितायां अन्येनाज्ञेयत्वसिद्धिसिद्धमित्यनुत्तरं सिध्युपायस्यानुपन्यस्तत्वात् । अन्यथा शशविषाणादीनामपि सद्भावसिद्धिप्रसंगादिति ।

( ९६३ – १९ ) किं च एकस्यां क्रियायां ब्रह्मणो ज्ञातृत्वं ज्ञेयत्वं च विरुद्धमिति वदन्वादी प्रष्टव्यः । किं कर्तृत्वकर्मत्वयोः लक्षणविरोधादसमावेशोऽङ्गीक्रियते उत परस्पर-परिहारेण वृत्तेर्नियमेन दर्शनात् । नाद्यः । क्रियाश्रयः कर्ता क्रियाविषयः कर्मेति लक्षणसंभवेन परसमवेतक्रियाफल-शालिकर्मेत्यादिलक्षणस्याग्राह्यत्वात् । न द्वितीयः । स्वाध्यायो ध्येतव्य इति विधेः स्वाध्यायविधायकत्वदर्शनात् । शब्दस्य स्ववाचकोपलंभात् । घटादिशब्दानामपि स्वरूप-पदार्थकत्वप्रतीतेः । तत्र भिन्नकर्मणि सति सकर्मकत्वं न केवलं स्वकर्मकत्वमिति चेन्न । कर्तृकर्मभेदस्यापरिहारात् । एकदेशः कर्ता समुदायः कर्मेति भेदोऽस्तीति चेन्न । घट शब्दस्य स्वव्यतिरिक्तवाच्यादर्शनात् । देवदत्तो ग्रामं गच्छ-त्यादौ कर्तृकर्मणोः प्रत्यक् पराग्भावदर्शनात् । कथमैक्य-मिति चेन । ( ९६४ – १३ ) परिस्पन्दरूपामु

क्रियास्वेवं न सर्वत्रेत्यलम् । किं च ब्रह्मणो ज्ञानस्वरूपत्वं च वक्तुमशक्यं तस्य कर्तृकर्माद्यभावात् । जानातिर्हि सकर्मकः प्रसिद्धः । अतस्तदर्थस्य कर्मणा भाव्यम् । कर्म च स्वरूपमन्यद्वा संभावितम् । क्रियात्वात् कर्त्रा च भवितव्यम् ।

न च ब्रह्मस्वरूपज्ञानस्य स्वयमेव विषयः । अंगीकारात् । नापि स्वव्यतिरिक्तं तदभावात् । न च तस्य ज्ञाताऽस्ति ततोऽन्यद्वस्तुनोऽभावात् । अतो ज्ञातृज्ञेयाभावात् न ज्ञानरूप ब्रह्मसिद्धिरिति । अतः शून्यवादान्न कश्चिद्विशेषः । उक्तरूपज्ञानतायाः शून्येऽपि संभवात् तदपि स्वप्रकाशरूपमित्यंगीकर्तुं शक्यत्वात् । तथाप्यस्माकं कुतस्तत्सिद्धिरिति चेत् । ब्रह्मणोऽपि कुतः सिद्धिः । स्वयमेव ब्रह्मेति चेत् । समानं शून्येऽपि । ननु जन्यज्ञानस्य कारकापेक्षा न तु नित्यस्य न च ब्रह्मज्ञानं क्रियारूपं नाप्युत्पत्तिमत् । अतो ज्ञातृज्ञेयादि कारकविशेषाभावेऽपि तस्य सत्ता भविष्यतीति चेन्न । नित्यत्वेन विशेषाभावात् ज्ञानस्य जानाते रूपत्वात् ।

न चोत्पत्तावेव क्रियाकारकमपेक्षत इति नियमः । अस्ति ब्रह्मेत्यादौ नित्याया अपि सत्तायाः कर्त्रपेक्षतादर्शनात् । अन्यथाप्रकारानुपपत्तिप्रसंगात् ।

( ९७७ – ७ ) अभेदो ब्रह्मणोऽन्यश्चेद्भेदाभाव एव वक्तव्यः अ..दप्रतिषेध इति पर्यायौ । प्रतिषेधप्रतिपादनं

प्राप्तिपूर्वकम् । न च भेदस्य केनापि प्राप्तिरस्ति । ईश्वरस्य प्रत्यक्षाद्यविषयत्वात् । अतो भेदस्याप्राप्तत्वात् तत्प्रतिषेधात्मकाभेदप्रतिपादकत्वं न युज्यते ।

द्वा सुपर्णेत्यादि श्रुतिप्रमभेदप्रतिषेधपरत्वे तु श्रुतीनां स्वव्याघातः स्यात् ।

( ९९२ – २६ ) यं कामय इत्यस्यार्थः । अहं यं यं उग्रं रुद्रं कर्तुं कामये तं तं उग्रं कृणोमि करोमि। व्यत्ययो बहुलमिति विकरणव्यत्ययः । सुमेधां सुमेधसं तथा तं ब्रह्माणं तमृषिं तं करोमि । अहं शरवे हिंसकाय । पश्च-मुखच्छेदात् ब्रह्मद्विषे रुद्रयेति द्वितीयार्थे चतुर्थी । एवं भूतं रुद्रं हंत वा उ – हंतुमेव धनुरातनोमि विस्तारयामि । अहं जनाय जनस्य समदं सम्मदं हर्षं करोमि । अहं द्यावापृथिव्युपलक्षिततान्सर्वानूर्ध्वाधोलोकान् धारणया न तु भीषयितुं आविवेश । विशेः छन्दसि लुङ लङ लिट् इत्यपरोक्षेपि लिट् । अहमस्य जगतः पितरं ब्रह्माणं मूर्धन् मूर्धनि सर्वोत्कृष्टतया सुवे जनयामि । न केवलं पदे स्थापयामि । एवम्भूताया मम योनिः कारणभूत समुद्रे अप्स्वपामन्तस्तिष्ठति । स्त्रीणां पतिनामग्रहणमनुचितमिति शिक्षणाय नारायण इत्यनुक्त्वा आपो नाराः इत्यादिनोक्तं तदर्थमेवाह । अत्र श्रिया ब्रह्मादीनां सर्वेषां ग्रहयः – ज्ञानिनोऽप्यवयन्तीपदेन जानन्ति । यस्मिंस्तदक्षरे

तस्मिन्नविनाशिनि परमे प्रज्ञा अधीनाः । जगतः प्रसूतिः प्रवृत्तिर्जनयित्री यस्मीयते यस्मात्प्रसृतोत्पन्ना । यच्च वस्तुतो येन तत्कर्मणा स्ववीर्येण वा तेयोपलक्षितैर्भूतैर्वा भूम्यां पृथिव्यां पृथिव्यादिषु लोकेषु जीवान् व्यससर्ज विससर्ज विविधं ससर्ज । यत्रौषधीभिः सहितान् पुरुषान्पशूंश्च चराचराणि भूतानि प्रेरणाय विवेशेत्यनेनैव सिद्धे यज्ञाङ्गत्यादिना विशिष्टानामेतदपादीनां ग्रहणाय पुनर्वचनम् । अतो यस्मात्परमतिशयेनान्यद्वरणीय समर्णायो नास्ति । यच्च परात्परं उत्कृष्टादुत्कृष्टतरम् । महतो महत्तरिमाणापि महांतं महत् यदेकंकेवलं अव्यक्तमतींद्रियम् । विश्वं पूर्णं तमसः प्रकृतेरज्ञानाद्वा परास्तादितिक्रम्य स्थितम् । तदेव तं यथार्थज्ञानरूपम् । तद्रुतदेवमत्यं ज्ञानपूर्वक्रियावत् । तदेव कवीनां मते परमं ब्रह्मेति अत्रापि स्फुटमभिमतार्थः ।

अस्य प्रसिद्धस्य देवस्य द्योतनादिगुणवतः । मीळ्हुषो भक्ताभिलषितवर्षितुः । एषस्येच्छारूपस्य सत्यकामस्येति यावत् । विष्णोः प्रभृते प्रभरणे । पूजने कृते तत्प्रसादात् । दया दत्बन्धने असुन् अहंकाराभिमानित्वेन जीवानां बन्धको रुद्रः । रुद्रियं महित्वं रौद्रं महिमानं विदे विविदे लब्धवान् । हि प्रसिद्धमेतत् । अश्विनौ युवामपि विष्णोः प्रसादादेवेशवद्वृत्तिरन्नवद्वर्तनं समस्तभोगवत्पदाम् सिष्टमयासिटं लब्धवन्तौ स्थ इति रुद्रादीनां

भगवत्प्रसादाधीना पदप्राप्तिरुच्यते । मनसः परमपुरुषस्य चक्षोः चक्षुषः प्रकृत्यांतःपादमन्यपरे इति प्रकृतिभावः आसीन्महाप्रलये । मुनिर्मौनी । ततस्तस्य चिंतनात् । एते वक्ष्यमाणाः विश्वो वायुः । इदमग्रे अस्य जगतोऽग्रे इत्यादिश्रुतिभ्यश्च विष्णोः समतीतक्षराक्षरत्वं सिद्धम् । यस्मात्परं नापरमस्ति किंचित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवितिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ।

अस्यार्थः यस्मात्परमात्मनः परमुत्कृष्टं वस्तु नास्ति । अपरमपकृष्टवस्ति । तच्च किंचिदल्पमित्येवार्थः । अन्यथा तेनेदं पूर्णमिति वाक्यशेषो विरुध्येत । वाक्यशेषेहीदमिति व्यतिरिक्तसद्भावो गम्यते । इदं शब्दार्थस्यासत्वे किं तेन पूर्णं स्यात् । ( ९९९ – १ ) तथा ततः प्रपंचात् ब्रह्मोत्तरतरमुत्कृष्टतरमिति वाक्यशेषोपि विरुध्येत । तत्र तत इति प्रपंचस्यावधित्वेनोक्तस्य सत्यत्वप्रतीतेः । यदि तदेव न स्यात् तदा कुतो ब्रह्मोत्तरतरं स्यात् । यस्मा– न्नाणीय इत्यत्र तु विरोधाभावान्न द्विः प्रयोगाच्चोभयनिषेधः ।

न च तद्वदत्रापि । ( १०११ – ७ ) नहि स्वरूपे स्वरूपत्वं नाम भिन्नधर्मोऽस्ति । तथापि त्वप्रत्ययप्रयोग– निमित्तं विशेषः ।

तस्मिन्नविनाशिनि परमे प्रज्ञा अधीनाः । जगतः प्रसूर्ना प्रकृतिर्जनयित्री यदमीयंतो यस्मात्प्रसृतोत्पन्ना । यच्च वस्तुतो येन तत्कर्मणा स्ववीर्येण वा तेयोपलक्षितैर्भूतैर्वा भूम्यां पृथिव्यां पृथिव्यादिषु लोकेषु जीवान् व्यससर्ज विससर्ज विविधं ससर्ज । यत्रौषधीभिः सहितान् पुरुषान्पशूंश्च चराचराणि भूतानि प्रेरणाय विवेशेत्यनेनैव सिद्धे यज्ञाङ्गत्वादिना विशिष्टानामेतेषामादीनां ग्रहणाय पुनर्वचनम् । अतो यस्मात्परमतिशयेनान्यदुत्कृष्टणीय समर्थांशो नास्ति । यच्च परात्परं उत्कृष्टादुत्कृष्टतरम् । महतो महत्तरिमाणापि महांतं महत् यदेकंकेवलं अव्यक्तमतींद्रियम् । विश्वं पूर्णं तमसः प्रकृतेरज्ञानाद्वा परास्तादितिक्रम्य स्थितम् । तदेव तं यथार्थज्ञानरूपम् । तदुतदेवमत्यं ज्ञानपूर्वक्रियावत् । तदेव कवीनां मते परमं ब्रह्मेति अत्रापि स्फुटमभिमतार्थः ।

अस्य प्रसिद्धस्य देवस्य द्योतनादिगुणवतः । मीढुषो भक्ताभिलषितवर्षितुः । एषस्येच्छारूपस्य मत्यकायस्येति यावत् । विष्णोः प्रभृते प्रभरणे । पूजने कृते तत्प्रसादात् । दया बद्बन्धने असुन् अहंकाराभिमानित्वेन जीवानां बन्धको रुद्रः । रुद्रियं महित्वं रौद्रं महिमानं विदे विविदे लब्धवान् । हि प्रसिद्धमेतत । अश्विनौ युवामपि विष्णोः प्रसादादेवेशवद्वृत्तिरन्नवद्वर्तनं समस्तभोगवत्पदाम् सिष्टमयासिटं लब्धवन्तौ स्थ इति रुद्रादीनां

भगवत्प्रसाधीना पदप्राप्तिरुच्यते । मनसः परमपुरुषस्य चक्षोः चक्षुपः प्रकृत्यांतःपादमन्यपरे इनि प्रकृतिभावः आसीन्महाप्रलये । मुनिर्मौनी । ततस्तस्य चिंतनात् । एते वक्ष्यमाणाः विश्वो वायुः । इदमग्रे अस्य जगतोऽग्रे इत्यादिश्रुतिभ्यश्च विष्णोः समतीतक्षराक्षरत्वं सिद्धम् । यस्मात्परं नापरमस्ति किंचित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवितिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ।

अस्यार्थः यस्मात्परमात्मनः परमुत्कृष्टं वस्तु नास्ति । अपरमपकृष्टवस्ति । तच्च किंचिपल्पमित्येवार्थः । अन्यथा तेनेदं पूर्णमिति वाक्यशेषो विरुध्येत । वाक्यशेषेहीःमिति व्यतिरिक्तसद्भावो गम्यते । इदं शब्दार्थस्यासत्वे किं तेन पूर्णं स्यात् । ( ९९९ - १ ) तथा ततः प्रपंचात् ब्रह्मोत्तरतरमुत्कृष्टतरमिति वाक्यशेषोपि विरुध्येत । तत्र तत इति प्रपंचस्याविधित्वेनोक्तस्य सत्यत्वप्रतीतेः । यदि तदेव न स्यात् तदा कुतो ब्रह्मोत्तरतरं स्यात् । यस्मा-न्नाणीय इत्यत्र तु विरोधाभावान्न द्विः प्रयोगाच्चोभयनिषेधः ।

न च तद्वदत्रापि । ( १०११ - ७ ) नहि स्वरूपे स्वरूपत्वं नाम भिन्नधर्मोऽस्ति । तथापि व्यप्रत्ययप्रयोग-निमित्तं विशेषः ।

( १०१९ – ६ ) यथा द्वैतवादिनां मते जीवब्रह्मणोरभेदत्वमभेद इति पर्यायशब्दवाच्यं वस्तु ब्रह्मणो भेदवर्जितम् । यथा गुणगुणिभेदवादिनां मते यथा स भेदो भेदिभ्यां भेदवर्जितः तथा भेदाभेदवादिमते यथा भेदाभेदौ भेदाभेदिनो भेदवर्जितः । तथापि भेदव्यवहारगोचरः । यथा जीवब्रह्मणोरभिन्नत्वमिति जीवब्रह्मणी अभिन्ने इत्यादि । तथा गुणगु ·नोर्भेदाभेदौ गुणगुणिनौ भिन्नाभिन्नाविति वा । ( १०१९ - ११ ) विशेषणविशेष्यभावेन भेदहीनेऽपि व्यवह्रियते । तत्र निमित्तं विशेषः । एवं विष्णावपि । नन्वभेदो भेदाभेदौ च ब्रह्मादिनानाभिन्नाः । ततो न दृष्टांताः सम्मता इति न युक्तम् । तथात्वेऽनवस्थादोषापातात् ।

अभेदाद्भिन्नयोर्भेदो यदि वा भेदभिन्नयोः । अनवस्थिरेव स्यात् न विशेषणतामतिः । विशिष्टप्रतीतिसिद्ध्यर्थं हि भेदोंगीकार्यः । न चाप्रतीतो भेदः तद्धेतुर्भवतीति तत्प्रतीतिरप्यङ्गीकार्या न चाविविक्ततया तत्प्रतीतिरप्युपयोगिनीति भेदस्यापि विशिष्टप्रतित्यंगीकारे कथं नानवस्थेति । गुणगुणिनोरत्यंतभेदपक्षे दूषणातरमाह नेति । यदि गुणो गुणिनोऽत्यंतभिन्नः स्यात् तदा मेरुमन्दरस्येव गुणो गुणिनो विशेषणतया न ज्ञायेतेत्यर्थः ।

( १०१९ – २३ ) सम्बन्धसद्भावान्नैवमिति चेत् । स सम्बन्धः प्रतीतो विशेषणतामतेर्मूलमप्रतीतो वा । आद्येपि

संबन्धिविशेषणतया प्रतीतो वा स्वातंत्र्येण प्रतीतो वा आद्ये तत्रापि संबंधान्तरप्रतीत्यपेक्षायां अनवस्था । द्वितीये अतिप्रसंग एव । न तृतीयः । संबन्धापरिज्ञाने तस्य विशिष्टज्ञानोपयोगाभावात् । संयोगादीनां हि ज्ञातानामेव विशिष्टप्रत्ययहेतुत्वं दृष्टम् । न सत्तामात्रेणेति भावः ।

( १०२४ – २३ ) तानेवानुविधावति तद्दर्शनमन्वेव विधावति अधोगच्छति । विशेषणप्रतिपादकं वाक्यम् । ( १०२४ – १३ ) देशः सर्वत्र पुरुषः स्वतन्त्र कालनित्यता । इत्यादिषु स्वबन्धाद्यथैव गुणरूपिणः । गुणित्वं गुणभोक्तृत्वं यद्विष्णोस्तच्च स स्वयमिति ब्रह्मतर्के ।

यथा पक्षी सर्वत्राकाशे पततीति पक्षिणः सर्वाकाशसंबन्धः प्रतीयते तथा आकाशोऽपि सर्वत्रास्तीति सर्वाकाशसंबन्धः आकाशस्य प्रतीयते । यथा गुरुतन्त्रः शिष्य इति शिष्यस्य गुरुणा संबन्धः प्रतीयते एवं परमपुरुषः स्वतन्त्र इति तस्य स्वसंबंधः प्रतीयते । यथाकालस्य नित्यता प्रतीयते । तथा कालस्यापि नित्यता प्रतीयते ।

मायावादिनस्त्वाहुः । निर्गुण एव परमात्मा । गुणास्तु मायामयाः सन्ति । अतो नोदाहृतश्रुत्यादिविरोध इति । तदसत् । तदीय सर्वगुणपूर्णत्वज्ञानस्य मोक्षसाधनता श्रवणात् । नहि मायामयार्थज्ञानं मोक्षसाधनम् । किंतु

( १०१९ – ६ ) यथा द्वैतवादिनां मते जीवब्रह्मणोरभेदत्वमभेद इति पर्यायशब्दवाच्यं वस्तु ब्रह्मणो भेदवर्जितम् । यथा गुणगुणिभेदवादिनां मते यथा स भेदो भेदिभ्यां भेदवर्जितः तथा भेदाभेदवादिमते यथा भेदाभेदौ भेदाभेदिनोर्भेदवर्जितः । तथापि भेदव्यवहारगोचरः । यथा जीवब्रह्मणोरभिन्नत्वमिति जीवब्रह्मणी अभिन्ने इत्यादि । तथा गुणगुणिनोर्भेदाभेदौ गुणगुणिनौ भिन्नाभिन्नाविति वा । ( १०१९ - ११ ) विशेषणविशेष्यभावेन भेदहीनेऽपि व्यवह्रियते । तत्र निमित्तं विशेषः । एवं विष्णवावपि । नन्वभेदो भेदाभेदौ च ब्रह्मादिनानाभिन्नाः । ततो न दृष्टांताः सम्मता इति न युक्तम् । तथात्वेऽनवस्थादोषापातात् ।

अभेदाद्भिन्नयोर्भेदो यदि वा भेदभिन्नयोः । अनवस्थिरेव स्यात् न विशेषणतामतिः । विशिष्टप्रतीतिसिद्ध्यर्थं हि भेदोंगीकार्यः । न चाप्रतीतो भेदः तद्धेतुर्भवतीति तत्प्रतीतिरप्यङ्गीकार्या न चाविविक्ततया तत्प्रतीतिरप्युपयोगिनीति भेदस्यापि विशिष्टप्रतित्यंर्गाकारे कथं नानवस्थेति । गुणगुणिनोरत्यंतभेदपक्षे दूषणांतरमाह नेति । यदि गुणो गुणिनोऽत्यंतभिन्नः स्यात् तदा मेरुमन्दरस्येव गुणो गुणिनो विशेषणतया न ज्ञायेतेत्यर्थः ।

( १०१९ – २३ ) सम्बन्धसद्भावान्नैवमिति चेत् । स सम्बन्धः प्रतीतो विशेषणतामतेर्मूलमप्रतीतो वा । आद्येपि

संबन्धिविशेषणतया प्रतीतो वा स्वातंत्र्येण प्रतीतो वा आद्ये तत्रापि संबंधान्तरप्रतीत्यपेक्षायां अनवस्था । द्वितीये अतिप्रसंग एव । न तृतीयः । संबन्धापरिज्ञाने तस्य विशिष्टज्ञानोपयोगाभावात् । संयोगादीनां हि ज्ञातानामेव विशिष्टप्रत्ययहेतुत्वं दृष्टम् । न सत्तामात्रेणेति भावः ।

( १०२४ – २३ ) तानेवानुविधावति तद्दर्शनमन्वेव विधावति अधोगच्छति । विशेषणप्रतिपादकं वाक्यम् । ( १०२४ – १३ ) देशः सर्वत्र पुरुषः स्वतन्त्र कालनित्यता । इत्यादिषु स्वबन्धाद्यथैव गुणरूपिणः । गुणित्वं गुणभोक्तृत्वं स्याद्विष्णोस्तच्च स स्वयमिति ब्रह्मतर्के ।

यथा पक्षी सर्वत्राऽऽकाशे पततीति पक्षिणः सर्वाकाशसंबन्धः प्रतीयते तथा आकाशोऽपि सर्वत्रास्तीति सर्वाकाशसंबन्धः आकाशस्य प्रतीयते । यथा गुरुतन्त्रः शिष्य इति शिष्यस्य गुरुणा संबन्धः प्रतीयते एवं परमपुरुषः स्वतन्त्र इति तस्य स्वसंबंधः प्रतीयते । यथाकाशस्य नित्यता प्रतीयते । तथा कालस्यापि नित्यता प्रतीयते ।

मायावादिनस्त्वाहुः । निर्गुण एव परमात्मा । गुणास्तु मायाजयाः सन्ति । अतो नोदाहृतश्रुत्यादिविरोध इति । तदसत् । तदीय सर्वगुणपूर्णत्वज्ञानस्य मोक्षसाधनता श्रवणात् । नहि मायामयार्थज्ञानं मोक्षसाधनम् । किंतु

तत्वज्ञानमेवेतिभावेन तां श्रुतिं पठति । विष्णुमिति विष्णुं सर्वगुणैः पूर्णं ज्ञात्वा संसारवर्जितः । निर्दुःखानंदभुङ्नित्यं तत्समीपे स मोदते । मुक्तस्यापि न न तत्साम्यापत्तिर्येन निर्दोषाशेषसद्गुणत्वंस्यादितिभावेन आह । मुक्तानां चेति । मुक्तानां चाश्रयो विष्णुरधिको अधिपतिस्तथा । तद्वशा एव ते सर्वे सर्व देव स ईश्वरः इति परमश्रुतिः । तस्मात्स एव सर्वदेवेश्वरो निर्दोषाशेष सद्गुणइति ।

श्री विष्णुतत्वनिर्णयोपन्यासः समाप्तः

॥ अथ वियदधिकरणे न्यायसुधा ॥

( ४३१ - १५ ) वियदादेरुत्पत्तिः परा-धीनविशेषोत्पत्तिरेव । देवदत्तः शरीरी जातो विद्वान् जातः घटः संयुक्तो जातः विभक्तो जातः इति चावस्थितस्वरूप एव वस्तुनि विशेषावाप्तिमात्रेण जननव्यवहारदर्शनात् ।

अपूर्वविशेषोपजने हि विशिष्टकारजनोदयं भाव्यम् । विशिष्टाकारश्च वस्तुस्वरूपाभिन्न इति तस्यैवैतज्जन्मवति उपादा-नतां नावकाशस्य मुख्योत्पत्तिः ।

( ४३१ – २४ ) यस्य चोत्पत्तिः तस्य प्रागभावेन भाव्यम् । न चाकाशस्य प्रागभावः संभवति । अनु-

पपन्नप्रतीतिकत्वात् । अभावो हि प्रतीयमानस्यात्रेति प्रतीयते न तु निराश्रयः । न चाकाशाभावस्याश्रयप्रतीतिरुपपद्यते । यदेवेहेति निर्दिश्यते तस्यैवाकाशत्वात् । उपादानाश्रिता-भाववादेपि तदभावान्नाभावप्रतीत्युपपत्तिः । प्रतियोग्याश्रय-एवाभावाश्रयः । न चाकाशस्याश्रयोऽस्तीति ।

( ४३२ · ३ ) तदभावोपि निराश्रयोस्त्विति चेन्न । निराश्रयत्वे कार्यत्वानुपपत्तेः । आकाशस्य ब्रह्मोपादानत्वं च निराकृतम् ।

प्रकृतिराकाशस्य कारणमितिकश्चित् । तन्मते प्रकृते-रजन्मप्रसंगः । आकाशो नावकाशः । किं तु मूर्तभाव इति पक्षप्रतिक्षेपः । तत्र पृच्छामः । प्रदेशरूपमाकाश-मंगीकृत्यैव मुच्यते उतानंगीकृत्य ।

( ४३२ – ५ ) प्रथमे यस्यकस्यचिन्मूर्तद्रव्याभावलक्ष-णस्याकाशस्योत्पत्तिर्वा सर्वमूर्ताभावस्य वा विवक्षिता । नाद्यः । तस्याः प्रत्यक्षादिसिद्धत्वेनाधिकरणानारंभकत्वात् । द्वितीये सर्वमूर्ताभावस्य सृष्ट्युत्पत्त्यनंगीकारे प्रलयेऽप्यस्य तदभावो अभ्युपगन्तव्यः स्यात् । अत्यंतमतो जन्मासंभावात् । यद्येवमंगीक्रियते तर्हि प्रलये मूर्तिनिबिडं जगत् स्यात् । अभावाभावस्य भावानतिरेकात् । तन्नाशत्वाद्वा । तथा च सृष्ट्युत्तरकालं मूर्तमात्रं च न स्यात् । एवं च सर्गप्रल-

तत्वज्ञानमेवेतिभावेन तां श्रुतिं पठति । विष्णुमिति विष्णुं सर्वगुणैः पूर्णं ज्ञात्वा संसारवर्जितः । निर्दुःखानंदमुङनित्यं तत्समीपे स मोदते । मुक्तस्यापि न न तत्साम्यापत्तिर्येन निर्दोषाशेषसद्गुणत्वंस्यादितिभावेन आह । मुक्तानां चेति । मुक्तानां चाश्रयो विष्णुरधिको अधिपतिस्तथा । तद्वशा एव ते सर्वे सर्व देव स ईश्वरः इति परमश्रुतिः । तस्मात्स एव सर्वदेवेश्वरो निर्दोषाशेष सद्गुणइति ।

श्री विष्णुतत्वनिर्णयोपन्यासः समाप्तः

॥ अथ वियदधिकरणे न्यायसुधा ॥

( ४३१ - १५ ) वियदादेरुत्पत्तिः परा- धीनविशेषोत्पत्तिरेव । देवदत्तः शरीरी जातो विद्वान् जातः घटः संयुक्तो जातः विभक्तो जातः इति चावस्थितस्वरूप एव वस्तुनि विशेषावाप्तिमात्रेण जननव्यवहारदर्शनात् ।

अपूर्वविशेषोपजने हि विशिष्टकारजनोदश्यं भाव्यम् । विशिष्टाकारश्च वस्तुस्वरूपाभिन्न इति तस्यैवैतज्जन्मवति उपादा- नतां नावकाशस्य मुख्योत्पत्तिः ।

( ४३१ – २४ ) यस्य चोत्पत्तिः तस्य प्रागभावेन भाव्यम् । न चाकाशस्य प्रागभावः संभवति । अनु-

पपन्नप्रतीतिकत्वात् । अभावो हि प्रतीयमानस्यात्रेति प्रतीयते न तु निराश्रयः । न चाकाशाभावस्याश्रयप्रतीतिरुपपद्यते । यदेवेहेति निर्दिश्यते तस्यैवाकाशत्वात् । उपादानाश्रिताभाववादेपि तदभावान्नाभावप्रतीत्युपपत्तिः । प्रतियोग्याश्रय एवाभावाश्रयः । न चाकाशस्याश्रयोऽस्तीति ।

( ४३२ · ३ ) तदभावोपि निराश्रयोस्त्विति चेन्न । निराश्रयत्वे कार्यत्वानुपपत्तेः । आकाशस्य ब्रह्मोपादानत्वं च निराकृतम् ।

प्रकृतिराकाशस्य कारणमितिकश्चित् । तन्मते प्रकृतेरजन्मप्रसंगः । आकाशो नावकाशः । किं तु मूर्तभाव इति पक्षप्रतिक्षेपः । तत्र पृच्छामः । प्रदेशरूपमाकाशमंगीकृत्यैव मुच्यते उतानंगीकृत्य ।

( ४३२ – ५ ) प्रथमे यस्यकस्यचिन्मूर्तद्रव्याभावलक्षणस्याकाशस्योत्पत्तिर्वा सर्वमूर्ताभावस्य वा विवक्षिता । नाद्यः । तस्याः प्रत्यक्षादिसिद्धत्वेनाधिकरणानारंभकत्वात् । द्वितीये सर्वमूर्ताभावस्य सृष्टावुत्पत्त्यनंगीकारे प्रलयेऽवश्यं तदभावो अभ्युपगन्तव्यः स्यात् । अत्यंतमतो जन्मासंभावात् । यद्येवमंगीक्रियते नर्हि प्रलये मूर्तिनिविडं जगत् स्यात् । अभावाभावस्य भावानतिरेकात् । तद्व्याप्यत्वाद्वा । तथा च सृष्ट्युत्तरकालं मूर्तमात्रं च न स्यात् । एवं च सर्गप्रल–

यदिदं विवर्तः स्यात् ।

मूर्तद्रव्याभाव एवाकाश इति द्वितीयपक्षनिरासः ।

यद्येवमंगीक्रियते यत्रासौ नास्ति तत्रेति चेत्तर्हि येनाधिकरणेनैकस्य पतत्रिणोऽन्यः परस्य च भावो विशिष्यते । तदर्थातिरसंगीकरणीयम् । स एव प्रदेशस्तदाकाश इति कथं तदनभ्युपगमः ।

किं चेहपक्षी नेहपक्षीति मूर्ततदभावाश्रयतया प्रदेशः साक्षिसिद्धः कथमपह्नोतुं शक्यते ।

अपि च किं मूर्तद्रव्यस्य प्रागभाव आकाशः किंवा प्रध्वंसः यद्वा अत्यंताभावः । अथवा अन्योन्याभावः । न प्रथमाद्वितीयौ । सृष्ट्युत्तरकाले निराकाशत्वप्रसंगात् । प्रागभावप्रध्वंसाभावयोरुपादाननिष्ठत्वेन तत्राकाशबुद्धेरन्यत्र तदभावस्यचापत्तेः । न तृतीयः । क्वचित् कदाचिन्मूर्तसद्भावे तदत्यंताभावानुपपत्तेः । न चतुर्थः (४३२–१८) घटान्योन्याभावो हि पटः तन्निष्ठो वेति तत्राकाशबुद्धिप्रसंगात् ।

मूर्तद्रव्यसंलर्गाभावमात्र आकाश इति चेत्तर्हि उत्पततः पतत्रिणः केन संसर्गो येन तदभावस्याकाशत्वं स्यादित्यवश्याश्रवणीयः प्रदेशः इति । तदेवमाकाशस्याभूत्वाभवनरूपोत्पत्तिरयुक्तेतिसिद्धं । सचाद्य

त्पत्तिः तदभिमानि विनायक देहोत्पत्त्यपेक्षया । अथवा उत्पत्तिश्रुतेर्भूताकाशविषयत्वांगिकारे तस्य मुख्योत्पत्ति आकाशे नीलिमोदेतीति श्रुतेः ॥ भूतमप्यसितं दिव्यदृष्टि गोचरमेवतु । इत्युक्तत्वात् च भूयादिशरीरवदनुद्भूतरूप-त्वान्नास्मदृष्टिगोचरोऽव्याकृताकाशः साक्षिसिद्धः ।

किं चोत्पत्तीत्यनुपपत्तिश्रुत्योर्विरोधोप्याकाश द्वैतमवगमयति । प्रदेशोपि मूर्तसंबंधाख्य पराधीनविशेषयुक् । कालप्रवाहस्य नित्यत्वं च तद्विशेषस्य क्षणलवादेः प्रवाहस्य प्रवाहिजन्यैव विशेषलाभः ।

वेदस्य व्यक्तिर्नाम विशेषः नियतविशिष्टानुपूर्विकत्वेना र्थावबोधकत्वशक्त्याविर्भावोव्यक्तिः । पद समन्वयबलेन प्रतीतः पदार्थसंसर्गो हि वाक्यार्थो नापरः । सन्चेन्नबाध्ये नेतीष्टापादनं । वियदादेः प्रपंचस्य बाधानंगीकारात् । नहि भ्रांतेरपर बोधिगम्यते । विषयस्य कुतो बाधो विद्यमानं हि बाध्यते नहि वंध्यसुतो वध्यो यज्ञदत्तो हि वध्यते ।

तथाहि भ्रांतिर्बाध्यत इति कोर्थः किं ज्ञानस्य बाधः विषयस्य वा ।

नाद्यः । तस्य स्वभावभंगुरत्वात् । परमते ज्ञानस्य साक्षित्वेन विनाशायोगाच्च ।

यविप्रिवर्तः स्यात् ।

मूर्तद्रव्याभाव एवाकाश इति द्वितीयपक्षनिरासः ।

यद्येवमंगीक्रियते यत्रासौ नास्ति तत्रेति चेत्तर्हि येनाधिकरणेनैकस्य पतत्रिणोऽन्यः परस्य च भावो विशिष्यते । तदर्थातिरमंगीकरणीयम् । स एव प्रदेशरूपआकाश इति कथं तदनभ्युपगमः ।

किं चेहपक्षी नेहपक्षीति मूर्ततदभावाश्रयतया प्रदेशः साक्षिसिद्धः कथमपह्नोतुं शक्यते ।

अपि च किं मूर्तद्रव्यस्य प्रागभाव आकाशः किंवा प्रध्वंसः यद्वा अत्यंताभावः । अथवा अन्योन्याभावः । न प्रथमाद्वितीयौ । सृष्ट्युत्तरकाले निराकाशत्वप्रसंगात् । प्रागभावप्रध्वंसाभावयोरुपादाननिष्ठत्वेन तत्राकाशबुद्धेरन्यत्र तदभावस्यचापत्तेः । न तृतीयः । क्वचित् कदाचिन्मूर्तसद्भावे तदत्यंताभावानुपपत्तेः । न चतुर्थः ( ४३२–१८ ) घटान्योन्याभावो हि पटः तन्निष्ठो वेति तत्राकाशबुद्धिप्रसंगात् ।

मूर्तद्रव्यसंसर्गाभावमात्र आकाश इति चेत्तर्हि उत्पततः पतत्रिणः केन संसर्गो येन तदभावस्याकाशत्वं स्यादित्यवश्याश्रयणीयः प्रदेशः इति । तदेवमाकाशस्याभूत्वाभवनरूपोत्पत्तिरशक्येतिसिद्धं । ननु च

त्पत्तिः तदभिमानि विनायक देहोत्पत्त्यपेक्षया । अथवा उत्पत्तिश्रुतेर्भूताकाशविषयत्वांगिकारे तस्य मुख्योत्पत्ति आकाशे नीलिमोदेतीति श्रुतेः ॥ भूतमप्यसितं दिव्यदृष्टि गोचरमेवतु । इत्युक्तत्वात् च भूयादिशरीरवदनुद्भूतरूप-त्वान्नास्मदृष्टिगोचरोऽव्याकृताकाशः साक्षिसिद्धः ।

किं चोत्पतीत्यनुपपत्तिश्रुत्योर्विरोधोप्याकाश द्वैतमवगम-यति । प्रदेशोपि मूर्तसंबंधाख्य पराधीनविशेषयुक् । कालप्रवाहस्य नित्यत्वं च तद्विशेषस्य क्षणलवादेः प्रवाहस्य प्रवाहिजन्यैव विशेषलाभः ।

वेदस्य व्यक्तिर्नाम विशेषः नियतविशिष्टानुपूर्विकत्वेना र्थावबोधकत्वशक्त्याविर्भावोव्यक्तिः । एवं समन्वयबलेन प्रतीतः पदार्थसंसर्गो हि वाक्यार्थो नापरः । सच्चेन्नबाध्ये तेतीष्टापादनं । वियदादेः प्रपंचस्य बाधानंगीकारात् । नहि भ्रांतेरपर बोधिगम्यते । विषयस्य कुतो बाधो विद्यमानं हि बाध्यते नहि वंध्यसुतो वध्यो यज्ञदत्तो हि वध्यते ।

तथाहि भ्रांतिर्बाध्यत इति कोर्थः किं ज्ञानस्य बाधः विषयस्य वा ।

नाद्यः । तस्य स्वभावभंगुरत्वात् । परमते ज्ञानस्य साक्षित्वेन विनाशायोगाच्च ।

द्वितीयेपि विषयः कोभिमतः । किं शुक्त्यादिः किं वा रजतादिः । नाद्यः यथार्थज्ञानोदयानंतरमपि विद्यमानस्य बाधायोगात् । न द्वितीयः । असद्रजतादेः नाश्यत्वायोगात् । नहि वंध्यासुतो वध्य इति दृष्टांतः । अधिष्ठान यथात्म्य ज्ञाननाश्यत्वस्यैव बाध्यशब्दार्थतया परेणांगीकृतत्वात् ।

बाधे स्वरूपं परं पृछति । योयं वियदादेः शुक्ति रजतादेश्च बाधोभिहितः स किं ज्ञानेन विनाशः किं वा निवृत्तिः । यद्वा नासीत् नास्ति नभविष्यतीति कालत्रय सत्तानिषेधः इति भावः । विनाश निवृत्योर्भेदस्तु मायावादांतर भेदापेक्षया ।

केचिन्मायावादिनः यावंति जानाति तावंत्योह्यविद्या इत्यंगीकुर्वाणा अधिष्टान याथात्म्यज्ञानेन सविलासा अविद्या विनश्यतीति मन्यंते ।

अन्ये तु एकैवविद्या तदवस्थाविशेषा एव रजताद्युपादानानि भवंतीति मन्वाना अधिष्टान तत्वज्ञानेन सहकार्यैरविद्या तिरोधत्त इति मन्यंते । तदुभय मतानुरोधेन विकल्पः ।

यद्वा विद्यायां विद्याया विनाशो भवति । कार्यं तु रजतादिकमुपादानविनाशे स्वयमेव विलियत इति परेषां मतम् ।

तदुभयानुसारेणेदं कल्पद्वयम् ।

( ४४१ – ६ ) अथवाऽलौविकरजतोत्पादवादिनां मतमनुसृत्य विनाश इति विकल्पः ।

( ४४१ – ९ ) आद्यस्य दूषणम् । न हि नाशो असतो भवेत् । असदेव रजतं प्रत्यभादित्युत्तरानुभवबला-दसदेव वान्छुक्तिरजतम् । न चासतः शशविषाणवद्विनाशः संभवति । स्ववृत्तिनिवृत्तिर्हि विनाशः न चासतः स्वरू-पमस्ति । व्याघातात् । नापि वियदादेर्विनाशः संभवति । नित्यत्वात् ।

घटादेरपि मुद्गरानलराभिघातादिनैव विनाशो नाधिष्ठा-नतत्वज्ञानेनेति नाद्यः । कल्पः ।

द्वितीयं निराकरोति । निवृत्तिश्चेति । प्रवृत्तस्य कथमेवोपपद्यते विरोधाभावादिरूपा निवृत्तिः स्वल्याविर्भावादि रूपप्रवृत्तिमतो भवेत् । सद्धर्मश्चाविर्भावः । शुक्तिरजतादिकं चासदित्युक्तम् । अतो प्रवृत्तस्य तस्य निवृत्तिश्च कथमे-वोपपद्यते ।

( ४४१ – १३ ) यद्वा विद्यया प्रवृत्तस्य तदु-पादानकस्य हि विद्यया निवृत्तिरुक्तरूपोपपद्यते । न हि शुक्तिरजतादिकं अविद्योपादानकम् ।

( ४४१ – १४ ) असत्वात् । सतो प्रवृत्तस्य

निवृत्तिश्च कथमेवोपपद्यते । एतेन वियदादावपि बाधा-सिद्धिरुक्ता वेदितव्या ।

तृतीयं दूषयति । वियदादेः यद्येवं त्रैकालिकसत्त्व-निषेधलक्षणो बाधो शुक्तिरजतादेश्चांगीक्रियते । तदाऽसद्वै-लक्षण्यमुरीकुर्वता तेनैव पुनस्सत्त्वमंगीकृतः स्यात् । सत्ता-विरहव्यतिरेकेण शशविषाणादीनामप्यसत्त्वस्य निरूपणात् । अपसिद्धान्तःप्रसंगान्नायं बाधः परेणांगीकर्तुं शक्यत इत्याशयः ।

विमतं नासत्प्रतीयमानत्वात् यत्प्रतीयते नन्नासद्यथापटः । यच्चासन्नतत्प्रतीयते यथा शशविषाणमिति प्रमाणेनासत्व-विरहस्य निश्चितत्वात् ।

यच्चोक्तं त्रैकालिकसत्त्वनिषेधेऽसत्त्वांगीकारप्रसंग इति प्रतीतत्वेनासत्त्वानुपपत्तौतदप्यस्तत् । निषेधस्य सत्वोत्सारणमात्र एव पर्यवसानोपपत्तेः ।

यदप्यत्रोक्तं सत्ताविरहव्यतिरेकेणासत्त्वंनाम दुनिरू-पमितितच्चायुक्तम् । निरूपाख्यमसत्त्वमिति निरूपणात् ।

रचतस्यासत्वेनुपपत्यभावादर्थापत्तेरन्यथैवोपपत्तिरित्यपि प्रत्युक्तम् । प्रतीतेरेवानुपपत्तेरिति । मैवम् । असतः प्रतीतिं निराकुर्वता तेनैव तस्या अंगीकार्यत्वात् । अप्रतीतस्य निषेधायोगात् । प्रतीतेन सद्विषयत्वनिषेधेपि असतः प्रति-षेध्य विनिष्टतया प्रतीतिरंगीकरणीया । तथा चासतः प्रती-

तिनिषेधे प्रतीतेरसद्विषयत्वनिषेधेचासतः प्रतीतिरनिवार्याणि मत्तो सत्प्रतीतिमान् । असत्संबन्धिने कर्तृत्वात् । तत् व्यवहर्तृत्वाद्वा संमतवदिति प्रमाणं च सूचितम् ।

( ४४२ – १७ ) परमेश्वरप्रतियोगिकः स्वात्मधर्मिको भेदः प्रत्यक्षेण ज्ञातुं शक्यत एव । स्वात्मनः प्रत्यक्षत्वात् ईश्वरस्य शास्त्रेणावगतत्वात् । शास्त्राद्विदितेश्वरस्यैव प्रत्यक्षं ततः स्वात्मनो भेदे प्रमाणं उक्तं न त्वज्ञानेश्वरस्य ।

( ४४२ – २५ ) यो हि यमर्थमवगम्यतद्विरुद्धधर्माणां यमध्यक्षीकरोति स तस्मात्तस्य भेदं प्रत्यक्षतः पश्यत्येवेति सर्वसाक्षिकम् । यद्यपि भेदः प्रत्यक्षसिद्धः, तथापि प्रतियोगिनो वैधर्म्यदर्शनं प्रत्यक्षसाचिव्यमाचरतीति न दोषः । दृष्टं हि रत्नतत्त्वसाक्षात्कारे शास्त्रीयलक्षणज्ञानस्य साचिव्यम् ।

( तर्हि ईश्वरं पक्षीकृत्यानुमानप्रवृत्तिरस्त्विति चेन्न । असिद्धस्य पक्षीकरणायोगात् । )

ईश्वरसिद्धिरंगीकर्तव्या । सा च श्रुत्यैव सा च यः सर्वज्ञसर्वविदित्यादिकाश्रुतिरमुमीश्वरमल्पज्ञत्वादिनानुभूताज्जीवाद्भेदे न वदिति । तस्मात्प्रत्यक्षबाधाभावेप्युपजीव्यश्रुतिविरोधेन कालात्ययापदिष्टता दुष्परिहारैव । ( ४४३ – ९ ) अनेनैवोभयपक्षीकारोपि परास्तः । उपजीव्यप्रत्यक्षश्रुतिबा-

धितत्वादिति । श्रुत्यैवैक्यसिद्धिरिति ।

न च युक्तम् । तद्धि जीवमनूद्य ईश्वरेणाववोधनीयम् । ईश्वरमनूद्य जीवेन वा उभावप्यनूद्याभेदो वा बोध्यः । पक्षत्रयेऽपि ऐक्यश्रुतेः जीवस्वरूपग्राहकोपक्षीणप्रत्यक्षेश्वरस्वरूपग्राहकोपजीव्यश्रुतिविरोधो दुष्परिहरः । तथा चोपजीव्यं विरोधेन उपजीवकं बाध्यते ।

ननु द्विविधो हि उपजीव्यभावः धर्म्यादिग्राहकत्वेन प्रतिषेध्य समर्पकत्वेन च । तत्र धर्म्यादिग्राहकोपजीव्यविरुद्धं बाध्यत एव आश्रयादिहीनस्योत्थानविरहापत्तेः । यत्र पुनः प्रतिषेधकस्योपजीवकस्य प्रतिषेध्यसमर्पकमुपजीव्यं भवति । तदा नायं न्यायः । तत्र चोपजीवकेनैवोपजीव्यस्य बाधः । निषेधार्थमेव तेन तदुपजीवनात् (४४४–५) दृष्टं हि इदं रजतमिति ज्ञानस्य नेदं रजतमिति ज्ञानेन बाध्यत्वम् । अत्रापि प्रत्यक्षागमयोः निरवकाशयोः उपजीव्यत्वात् । उपजीवकाभ्यामेवानुमानागमाभ्यां तयोः बाधो भविष्यति इति चेन्न । (४४४ – ९) सर्वज्ञत्वाद्यनुमानेनागमेन वा विरोधिना यः सर्वज्ञ इत्यागमस्य बाधो वक्तव्यः । अस्य बाधितत्वे अनुमानादेरुत्थानमेव दुर्लभं । दूरे तद्बाधनं । परमात्म लक्षणस्य धर्मिणः तदेकगम्यत्वात् ।

ननु कथमिदं रजतमिति ज्ञानस्य बाधोच्यते । नहि नेदं रजतमिति ज्ञानं रजतताविशेषं वस्तुधर्मीकृत्योत्पद्यते किंतु स्वरू-

पमात्रं । सर्वमपि हि ज्ञानं धर्मिणि प्रमाणं प्रकारेतु विपर्ययः । तदत्रापीदंरजतमिति ज्ञानमिदमंशे प्रमाणमिति तत्सिद्धमिदमाकार माश्रित्य प्रवृत्तेन बाधक प्रत्ययेन विरोधाद्रजतांशे पूर्वं ज्ञानस्या-प्रामाण्यं युज्यत एव । (४४४।१९)

इदं न रजतमिति हि बाधकज्ञानमुत्पद्यते न पुनर्नेदं रज-तं चेति । न चात्र तथा स्वरूपद्विशिष्टांशेपि बाधकाभावात् । न चाभेदानुमानागमौ बाधकौ अन्योन्याश्रयत्वात् । बाधित-त्वेतच्छ्रुतेरप्राण्येसत्युपजीव्य विरोधरहितस्यानुमानादेः बाधकत्वं सति च तस्मिन् तद्विरोधिन्याः श्रुतेरप्रामाण्यमिति ।

( न च रजतज्ञानादावन्योन्याश्रयदोषः शंक्यः । रजतज्ञा-नबाधस्यानुभवसिद्धत्वात् । न च सार्वज्ञादिबाधो अनुभवसिद्धः ।)

कथं वा अनुमानादेः श्रुति बाधकत्वं । न तावद्विरोधि मात्रेण । वैपरीत्यस्यापि सुवचत्वात् । नापि विरोध्युत्तर ज्ञानत्वेन शुक्तिरियमिति ज्ञानानंतरं रजतमिदमिति ज्ञानस्य दर्शनात् । अनुत्तरविरोधिज्ञानं बाधकमिंतु सोत्तरमित्यपि न । कदाचिदनु-त्तरस्यापि रजतज्ञानस्य संभवात् । किंतु यावच्छक्ति परीक्षितमु-त्तरं विरोध्यपरीक्षितस्य पूर्वस्य बाधकं भवति । न चैवमत्रा-स्तीति ।

(४४५-३) अथवा यः सर्वज्ञ इत्यादिश्रुतेः ब्रह्मस्वरूपमात्रे प्रामाण्यमप्रामाण्यं तु सर्वज्ञादि विशिष्टाकार इति वदतः कोमि

प्राय: । किं शुक्तिरजतादिज्ञानमिदैकमेवेदं ज्ञानं विषयभेदेन प्रमाणमप्रमाणं चेति । किं वा ज्ञानद्वयमेतत् तत्रैकं प्रमाणमपरं चाप्रमाणमिति । नाद्यः स्वरूप इव धर्मांशेऽपि प्रामाण्ये बाधकाभावात् ।

न द्वितीयः । ज्ञानद्वयत्वानङ्गीकारात् । अन्यथा स्तंभोयमित्यादावपि ज्ञानद्वयकल्पनापत्तिः । तथा च सामानाधिकरण्यं न केनापि ज्ञायेत ।

अस्तुवेदंज्ञानद्वयं तथापि नैकस्याप्रामाण्यं शक्यते वक्तुम् । ( ४४५ । ६ ) स्वरूपज्ञानस्येव धर्मस्याप्यबाधितत्वात् ।

यदि विशिष्टाकारे ज्ञानं प्रमाणं न भवेत्तर्हि स्वरूपे च प्रमाणं न भवेत् । यदि विशिष्टविषयं ज्ञानं प्रमाणं न चेत्तर्हि स्वरूपज्ञानमप्रमाणंस्यादविशेषादिति पक्षद्वयेऽप्यनिष्टप्रसंगः ।

( ४४५ । १३ ) नानुमानागमयोरुपजीव्यप्रमाणविरोधोऽस्ति । यः सर्वज्ञ इत्यादिश्रुतिसिद्धब्रह्मस्वरूपमात्राश्रयणेन प्रवृत्तत्वात् । न हि सार्वज्ञादिविशिष्टाकारमवलंब्यानुमानादिना प्रवर्तितव्यमित्यत्र नियामकमस्ति । ततो विरुद्धाकारस्यानुपयोगितयानुपजीवनादुपजीव्यस्य च स्वरूपमात्रस्याविरोधित्वान्नोपजीव्यप्रमाणविरोधोनुमानादेः । प्रमाणविरोधस्तु कथंचित्स्यादि-

त्यापि न युक्तम् । तथात्वे परमाणवः सावयवा इत्यादेरनुमानस्य वाक्यस्य च कथमुपजीव्यविरोधो विरोध इति वक्तव्यम् । परमाणुग्राहकेण सिद्धत्वादिति चेन्न । प्रमाणेन निरवयवतयैव तेषां तत्रापि परमाणुत्वस्यानुपयोगिनोऽपजीव्यत्वं किं तु स्वरूपमात्रस्येति वक्तुं शक्यत्वात् । नैवं युक्तम् । निरवयवत्वादिना विना परमाणोर्द्धर्मिकरणासंभवात् । स्वरूपमात्रधर्मीकरणे सिद्धार्थतापत्तिरिति चेत् । समं प्रकृतेऽपि । आरोपितेन सार्वज्ञादिना व्यावृत्तस्य धर्मीकरणे को दोषः । यो यं स्थाणुः स पुरुष इति वदतीति चेन्न । आरोपितेन निरवयवत्वादिना व्यावृत्तस्य परमाणोर्धर्मीकरणसंभवादतिप्रसंगः । निरवयवत्वादिग्राहकं प्रमाणतयावधृतम् । नारोपित इति चेत् । तुल्यमत्रापि श्रुतेरपि प्रामाण्यनिश्चयात् । तदेवं प्रमाणसिद्धेन निरवयवत्वादिना विशिष्टस्यैव धर्मीकरणं तथात्रापि सार्वज्ञानादिना पारमार्थिकेनैव विशिष्टस्यैव यथा धर्मीकरणमित्यतो धर्मिग्राहिविरोधो दुष्परिहार इति । स्यादेवत् । यथा खल्वभेदप्रमाणयोरनुमानागमयोरुपजीव्यविरोधान्नाभेदसाधकत्वं तथोदाहृतायाभिन्नोचिंत्य इत्यादिभेदश्रुतेरप्युपजीव्यविरोधान्नभेदसाधकत्वं संभवति । तादात्म्यप्रतियोगिकः प्रतिषेधो हि भेदो नाम । न चाप्राप्ते तादात्म्ये तत्प्रतिषेधबोधनं युक्तमित्यभेदप्रापकंप्रमाणमुपजीव्यप्रवृत्ताभेदश्रुतिः कथं नोपजीव्यविरुद्धा । किं च निर्भेदं स्वरूपमाश्रित्य तस्य भेदो बोधनीयः । तथा च कथं नोपजीव्यविरोधः । यथोक्तम् । अभेदं नोल्लिखन्धीर्न भेदोल्लेखन-

क्षमा । तथाचाद्येप्रमा सास्यान्तेंते स्वापेक्ष्यवैशसात् । नैतद-प्यतिसुन्दरम् । तथाहि । भेदश्रुतेर्हि न धर्मिसमर्थकत्वेना-भेदज्ञानोपजीवकत्वं तावत् । जीवेश्वरस्वरूपस्यैव धर्मित्वात् । नापि स्वरूपप्रामाण्यग्राहकत्वेन । प्रत्यक्षेणैव तत्सिद्धेः । अतो निषेध्य प्रापकतयैवेति वक्तव्यम् । न च तद्विरोधो प्रामाण्य-मावहति । निषेधशास्त्र पलापप्रसंगात् । न च प्रमाणप्राप्तस्यायं प्रतिषेधः । किं तु तत्त्वमस्यादिश्रुतितात्पर्यापरिज्ञानादिप्राप्तस्यैव । यदपि निर्भेदं स्वरूपमादाय भेदो बोद्धव्य इति ।

न तत्राप्युपजीव्यविरोधः । तयोपि न ययोर्भेदो वोध्यते न तयोरभेद आश्रयणीयः किं तु स्वगत भेदं वस्तुधर्मितयोपादाय तस्यान्यतो भेदो बोध्यते । अतो जीवेश्वरभेदश्रुतिस्वदभेदोप-जीवनाभावादनपेक्षत्वलक्षणदलयुक्तं भेदसाधकत्वमिति शेषः । किं च तिष्ठतु तावद्यः सर्वज्ञ इत्यादिश्रुतेरुपजीव्यत्वं तथाप्यभे-दानुमानागमबाधकत्वं भवेदेव । इयं खलु श्रुतिः यः सर्वज्ञइत्या-द्यासार्वज्ञादि विशिष्टमीश्वरं प्रतिपादयती न किंचिदपेक्षते ।

( ४४६ । ९ ) अनुमानागमौ तु सापेक्षौ । सापेक्ष-निरपेक्षयोश्च निरपेक्षस्य प्राबल्यसिद्धिः । ननु यः सर्वज्ञ इत्यादि श्रुतिरनुवादिनी किं न स्यादिति चेन्न । सार्वज्ञादिविशिष्टं ब्रह्मश्रुतिव्यतिरिक्तप्रमाणागम्यं । शास्त्रैकयोनित्वस्य समर्थितत्वात् नहि भ्रांतिप्रतिपन्नस्यानुवादः । कचित्प्रमितस्यैवान्यत्रारोपात् । न चाज्ञातस्यानुवादःसंभवति। अतो नेयंश्रुतिरनुवादिनी अनुमानसिद्धश्च

अनुवादइति च न युक्तं । तद्धि किंचित्केनचिद्विशिष्टमेव प्रतिपा–दयति । न तु निष्कृष्टंवस्तु । न च जीवादि साधारणधर्म विशिष्टार्थे सिद्धादिश्वरः सिध्यति । तस्मात् भेदकधर्मवैशिष्ट्येनैव तत्सिद्धिर्वक्तव्या । (४४६—२४) तथा चानुमानादेरुपजीव्य विरोधेवज्रलेपायितः । श्रुतेः सार्वज्ञादिविशिष्टे ब्रह्मणि प्रामाण्य-मुक्ताः । इदानीं दुःखित्वादिविशिष्टे जीवे प्रत्यक्षस्य प्रामाण्यं समर्थ्यते । तथा हि नाभेदानुमानागमयोरुपजीव्यप्रमाणादि-विरोधेनाप्रामाण्यम् । अहं दुःखीत्यादेरनुभवस्य मिथ्यानुभवत्वात् अंतःकरणगतो हि दुःखादीरनर्थस्वरूपतो मिथ्याभूतो जपाकुसु–मारुणिमेव स्फटिके चैतन्ये चकास्ति ।

न च भ्रांतिपक्षे भेदकेन वस्तुमिष्यत इत्यत आह । न दुःखानानुभवः क्वापि मिथ्यानुभवतां व्रजेत् । न हि बाधः क्वचिद्दृष्टो दुःखाद्यनुभवस्य तु । अयमाशयः । भवेदेतद्यद्यहं दुःखीत्याद्यनुभवे मिथ्यानुभवस्यान्न च तथा । अपितु प्रमाणमेव । यद्यपि दुःखादिकमन्तःकरणगतं तथापि स्वरूपेण सदेव । जीवात्मनश्च तद्भोक्तृत्वेन तद्वत्वं तात्त्विकमेव । अल्पशक्तित्वपारतंत्र्यादिकं तु स्वरूपमतमेवेत्याशयः । कुतः बाधाभावात् ।

( ४४७ । ७ ) न हि कादाचित्कुत्रचित्कश्चिन्नाहं दुःखी किंत्वन्तःकरणगतेनैव मिथ्यादुःखेन दुःखितयात्मान–ममनिपीति बाधकप्रत्ययवान् दृश्यत इत्यर्थः । स्वाभाविकत्वविवक्षया

विमुक्तश्च विमुच्यत इत्यादिश्रुतिः । अन्यथाहं दुःखीत्याद्यनुभवविरोधेन श्रुतेरप्रामाण्यनिस्तारः । अनुभवस्य भ्रांतित्वान्न श्रुतिबाधकत्वमिति चेन्न । अन्योन्याश्रयत्वात् । सति श्रुतिप्रामाण्यनिश्चयेऽनुभवस्य भ्रांतित्वान्न श्रुतिबाधकत्वमिति चेन्न । अन्योन्याश्रयत्वात् । सति श्रुतिप्रामाण्यनिश्चये अनुभवस्य भ्रांतित्वं तस्मिंश्च सत्यसाविति । श्रुतिप्रामाण्यनिश्चयेऽनुभवस्य भ्रांतित्वं तस्मिंश्च सति श्रुतिप्रामाण्यनिश्चय इति परस्पराश्रयत्वप्रसङ्गः ।

नन्वनुभवविरोधेन श्रुत्यप्रामाण्याभिधानेऽपि समानमेतत् । न समानं अनुभवस्यानपेक्षत्वाच्छ्रुतेस्तदपेक्षत्वात् । अन्यथा ( ४४८ । १३ ) सर्वत्र धर्मिग्र हकविरोधोच्छेदापत्तेः । नेदं रजतमिति ज्ञानप्रामाण्यस्य साक्षिणा परीक्षया निश्चितत्वादिदं रजतमिति ज्ञानस्यापरीक्षितस्योपजीव्यस्यापि बाधोपपत्तेः । तत्र नायं न्यायः उपजीव्योपजीवकन्यायस्यापरीक्षितविषयत्वात् । प्रामाण्यसंदेहे खलु न्यायानुसरणं निश्चितेतु प्रामाण्ये किमनेन : साक्षिणा श्रुतिप्रामाण्यं निश्चितमिति न परेणांगी कर्तुं शक्यते । तथासति तत्प्रामाण्यस्यांगीकर्तव्यत्वप्रसंगात् । इष्यते तदिति चेन्न । तथा सत्यहंदुःखीति दुःखादिविषयेपि स एवेति तस्य तत्रापि प्रामाण्यमेव ग्राह्यं स्यात् । न चेच्छ्रुतिप्रामाण्यग्रहणे भ्रमस्यादिति । ननु कथं प्रत्यक्षादेरेकत्र प्रामाण्येप्यन्यत्राप्रामाण्यमितिचेत् । कारणविशेषादितिभ्रमः । सचोत्पत्तौ दोषो ज्ञप्तौ बाधः दोषेपिबाधोन्नेय एव । न चात्र नुभवयोर्विशेषः बाधाभाव साम्यात् ननु विरोद्धयोःश्रुत्यनुभवयोः कथंप्रामाण्यं अन्यतर प्रामाण्यंगीकारे

श्रुतेरेव तदुचितं अपौरुषेयत्वादि युक्तिपरीक्षासहकृतेन साक्षिणा गृहीतत्वात् ।

( ४४७ । ५ ) न तु दुःखानुभवस्य तस्य केवलत्वादिति चेन्न । दुःखादावपि सजातीयविजातीयसंवादरूपपरीक्षसद्भावात् । तर्हि कथमन्यतरप्रामाण्यनिश्चय इति चेन्न । श्रुतिप्रामाण्ये दुःखादावपि साक्षिणः प्रामाण्यात् न च विरोधः अद्वैतसत्ता-मन्तरेण श्रुतिप्रामाण्यसत्तायाः संभवात् । नह्यपौरुषेयत्वा-दियुक्तयो विषयविशेषनियतप्रामाण्यनिश्चयेप्यसाक्षिणः सा चिव्यमाचरंति । किं तु प्रामाण्यमात्रनिश्चये । तच्च विषयांतरेपि संभवति । न च दुःखसत्तामन्तरेण तत्र प्रामाण्यस्य संभवोस्ति । न च दुःखसत्तायाः श्रुतिप्रामाण्यमात्रस्य विरोधोस्ति । अतः श्रुतिस्वरूपतत्प्रामाण्यग्राहकत्वेन धर्मिग्राहकत्वेन च श्रुतेरनुभव एव प्रबलः ।

यद्यपि श्रुतिस्वरूपं श्रोत्रवेद्यं तथापि श्रोत्रजनिततद्वृत्ति-प्रामाण्यंशे यावन्न साक्षिणा गृह्यते तावन्नतत्स्वरूपं सिध्यतीत्यतः श्रुतिस्वरूपावसायोपि साक्षिण्येवायतते । तत्र कः साक्षिणः याथार्थ्यनियमस्योपयोगः । किं च तदभावेनापन्नेष्यते । उच्यते । न स्तम्भोयमित्येकाकारप्रतिनियतंज्ञानं हि निर्णयादिशब्दैरभिधीयते अपि तर्हि तदनन्तरभावी वरतु तयाश्वासः ।

( ४४९ । १५ ) तथा हि । वक्तारो भवन्ति । स्तंभ इति प्रतीयते भवति चायं स्तंभ इति वा वस्तुतत्वं तु न विद्म इति वेत्ति तत्कस्य हेतोः । एकाकारप्रतिनियतेष्वपि ज्ञानेषु केषां चिदभ्रमत्वस्य बहुलमुपलब्धत्वेनेदानीं जायमानेपि एकाकारनियते ज्ञाने वस्तु तथात्वविश्वासाभावो भवति । भवतुवस्तु तथात्वाश्वासो वस्तु दर्शन पृष्टभावी निर्णयः । सोपि तस्यदर्शनस्य भ्रमत्वाभ्रमत्व निर्णयमेवापेक्षते । किं साक्षिणेत्यत उक्तं । भ्रमत्वमभ्रमत्वंच यदेवानुभवोपमं । एकस्य भ्रमतातत्र परस्याभ्रमता कुतः । भ्रमत्वाभ्रमत्वं च सर्वं वेद्यं हि साक्षिणा । स चेत्साक्षी कचिद्दुष्टः कथं निर्णय ईयते इति । अयमाशयः । यदि साक्षी कचिद्व्यभिचरेत् । तदा तेनाविश्वासनीयं येन कारणं दोषा हि निश्चयो न स्यात् । तदभावे प्रत्ययानां भ्रमत्वादिर्ननिश्चयेत । तथा च वस्तुनिर्णयो न स्यात् । कार्यकारणभावो कार्योदयायोगात् । निर्णयाभावे च हनोपानादि सर्व व्यवहार विलोपप्रसंग । स च करणदोषादित्वं न निश्चितं यद्यपि प्रत्ययानां भ्रमत्वावधारणकारणं तन्निश्चयश्च साक्षात्परंपरया वा साक्षिण्यायतते । सहि कारणदोषादिकं स्वयमेव तद्ग्राहक प्रामाण्यग्रहणेन वा निश्चित्य भ्रमत्वं निश्चिनोति । ततश्च तस्य कचिदयतार्थत्वेऽविश्वसनीयत्वापत्या न निर्णयः स्यात् । (४४९, २१) अभ्रमत्व निश्चयस्तु न संवादाधीनः तथात्वेनवस्थादिदोषापातात् । किंतु केवल साक्षिण्यायत्तः विपर्ययशंकानिरासेतु संवादस्यानुप्रवेशः न च संवादोप्यनिश्चितोंग त निश्चयश्च साक्ष्यधीन एव ( २६ )

सक्षियाथार्थस्य साक्षिणैव निश्चयोपपत्तेः । नात्र शंका । नन्वर्थ संदेहेपि व्यवहार दर्शनात्कथं एतत् । मैवं । व्यवहारमात्रस्य तथात्वेति न शंकस्याविसंवादिनो विशिष्टव्यवहारस्य तस्य निश्चय ज्ञानपूर्वक त्वादुक्तं युक्तं । (४५० १४) तस्मात्सर्वलोक प्रसिद्धस्य निःशंकस्याविसंवादिनो व्यवहारस्य कार्यभूतस्य सिद्धये वस्तु तथात्व तथात्वनिश्चयः कारणभूतोंगीकर्तव्यः । तत्सिद्धये कारण-दोषादिनिश्चयद्वारा साक्षिणा ज्ञानानां भ्रमत्वाभ्रमत्व निर्णयोंगी-कार्यः । तत्सिद्धये च साक्षिणो विश्वसनीयत्वं तत्सिद्धये च साक्षी तदा निर्दोषो यथार्थश्चांगीकार्यः । शुद्धः साक्षी यदा सिद्धो दुःखित्वं वार्यते कथम् । ततश्च धर्मिग्राहक-त्वेनोपजीव्यसाक्ष्यनुभवविरोधात् अभेदश्रुतेरप्रामाण्यमिति । अद्वैतवादिभिः खलु तत्वं पदयोः विरुद्धस्वार्थैकदेशत्यागेनै-कदेशलक्षणया सामानाधिकरण्यमात्रमुख्यमंगीकृतम् । ततो वरं पदद्वयस्य मुख्यार्थत्वमभ्युपगम्य सामानाधिकरण्यमात्रस्य गौणत्वमभ्युपगन्तुं तत्वमसीत्यादिव्यपदेशः सादृश्याद्गौणः इत्युक्तम् । नान्यतोस्तिद्रष्टेत्यादिव्यपदेशस्तु प्राधान्यस्वात-न्त्र्याभ्यां लाक्षणिकः । द्रष्टृपदेन तत्रारोपितं वैशिष्ट्यं स्वातन्त्र्यं चोपलक्ष्यते । तथाच द्रष्टाविशिष्टः स्वतन्त्रश्च न्यो नास्तीत्यर्थः । यद्वा तत्वमसीत्यादिनिर्देशोऽपि प्राधान्य-स्वातन्त्र्याभ्यां लाक्षणिको व्याख्यायते । तथाहि ।

(४५१ । ९) तच्छब्देन तदीये प्राधान्यस्वातन्त्र्ये लक्ष्येते । पुनस्ताभ्यां तद्विषयता लक्ष्यते । ततश्च तत्प्र-

धान्वकस्तन्त्रश्चेति वाक्यार्थो भवति । परे व्यये सर्व एकीभवन्ति इति वाक्यं स्थानैक्यादिविषयम् । अतत्वमसीतिच स्थानैक्येनैक्यव्यपदेशो लाक्षणिकः । स्थानगतस्यैक्यस्य स्थानिषु प्रयोगात् । एवमत्यन्तमिति तु प्रयोगे लक्षितलक्षणा । विषयैक्यमत्यन्तैक्यम् । ततश्च मतिमतामिति । सर्वदा विद्यमानेऽपि सादृश्यम् । युक्ते तु व्यक्तमिति तदभिप्रायेणापि विशेषतोऽभेदोक्तिर्युक्ता । सर्वं खल्विदं ब्रह्मेत्यादि अभेदोक्तिस्तु प्राधान्यस्वातन्त्र्यनिमित्तकमेव । सत्यमस्ति सादृश्यं किंतु तत्सत्तादिनैव । नतु जीवनदानादिना । नन्वानंदादिना सादृश्यं जीवेष्वपि नास्ति ।

( ४५१ । २० ) केषांचिज्जीवानांमतद्रूपताभ्युपगमादिति चेन्माभूत् । नहि जीवमात्रंप्रति तत्त्वमसीत्युच्यते तस्य वेदानधिकारित्वात् । किंतु मोक्षयोग्यं प्रत्येवेति न दोषः ।

( ४५२ । ६ ) एकमेवाद्वितीयम् । ब्रह्म एकमभिन्नम् । एकमपि घटादिकमवयवभेदवदुपलब्धं अत एकेत्युक्तम् । अद्वितीयं समाभ्यधिकरहितम् । इह ब्रह्मणि किंचन गुणादिकमपि नानाभूतं नास्ति । यस्त्विह ब्रह्मणि विद्यमानं गुणादिकं नानाभिन्नमिव शब्दादिभिन्नं च पश्यति । स मृत्योरनंतरं मृत्युं नरकमाप्नोति इति श्रुतावित्यस्माद्भेदाभेदनिराकृतिः । इवोभयेच सादृश्य इति वाक्शब्दनिर्णये ।

इति पृथगधिकरणसुधानुवादः ।

अथ भक्तिपादीय 'त्रिगुणात्मकं मनोऽस्त्येव' इति

अनुव्याख्यानव्याख्यामारभ्य सुधानुवादः ।

( ४६० । ७ ) जीवात्मा न संस्काराश्रयः त्रिगुणात्मकत्वात् ईश्वरवत् । भावनाश्रयादिगुणात्मकद्रव्याश्रया संस्कारत्वाद्वेगादिवत् । सत्वादिगुणानांगीकारे चेतनपदं प्रयोक्तव्यम् । त्रिगुणात्मकग्रहणं स्वरूपकथनम् । तस्य नित्यं चेतनस्य तत्संबन्धस्त्वनित्यः मुक्तौ निवृत्तः । प्रलये सतोऽप्युपचयापेक्षया जन्मश्रुतिरिति भावः । मुख्यार्थे बाधकसद्भावात् । प्रलये मनो न स्यात् । तथाच पुनः संस्काराभावप्रसंगः । अविद्या कामकर्माधीनः संसार इति चेन्न । अविद्यादेरेव संसारस्यात्मनः परं कारणमामनंतीत्यादिस्मृतिविरोधाच्च ।

न च संस्काराणां गुणत्वेनोपादानत्वानुपपत्तिः । मनोवृत्तित्वेन तेषां द्रव्यत्वात् । मनसा पदार्थदर्शनमनुभव एव न तु स्मृतिः । तथात्वे वक्तव्यः स्मरणत्वं खल्वस्य तचिन्हस्य तदित्युल्लेखस्य सद्भावाद्वा कल्प्यते । असन्निहितगोचरत्वाद्वा संस्कारप्रभवत्वाद्वा । नाद्यः । इदमित्युल्लेखेन तदभावात् । अत एव स्मृतिविपर्यासोऽमिति चेन्न । स्मृतित्वस्यैवासिद्धेः । न द्वितीयः । विषयसान्निध्यस्योपपादितत्वात् । न तृतीयः । पदार्थजन्मनि संस्कारस्योप[illegible]त्वेनासिद्धेः । सस्मारथा मनोरथे ध्याने

वा संस्कारयोनीनर्थान्मनसानुभवत्येवं स्वप्नेपीति किमनुपपन्नम् । इयांस्तु विशेषः । मनोरथादौ प्रयत्नपूर्वकापदार्थसृष्टिः स्वप्ने पुनः, ईश्वरेच्छाधीनैवेति । अपरे तु भवत्वेवायमनुभवः किंतु जागरानुभूतस्मर्तव्याथ एवेति मन्यन्ते । तदप्यसत् । तथाहि ।

( ४६१ । ३ ) किमयं अनुभवो यथार्थो वा अयथार्थो वा । नाद्यः, बाह्यार्थानां देशकालविप्रकृष्टत्वेन तदनुपपत्तेः । द्वितीयं वक्तव्यं, किमयंमगजे गजत्वोल्लेखीत्ययमयथार्थः, किंवा गजएवासन्निकृष्टे सन्निकृष्टत्वोल्लेखीत्ययथार्थः ।

आद्ये नायंगजः किन्तु गवयएवेति बाधोदयः स्यात् । द्वितीये नायं सन्निकृष्टः किंनाम विप्रकृष्ट इति बाधो भवेत् । न चैतदस्ति । तस्मात्संस्कारप्रभवसन्निकृष्टसत्यार्थप्रमितिरेवेयमिति युक्तम् ।

ननु जाग्रत्वस्यापि संस्कारोस्त्येवेति सोपादानत्वसंभवात् । कथं तत्प्रतीतिः भ्रांतिरित्युच्यते । अन्यथा, अर्थप्रतीतिरपि भ्रांतिस्यादविशेषादिति । मैवम् ।

( ४६१ । ११ ) नहि वयं कारणसंपादनसंभवमात्रेण अर्थानां सत्यतामातिष्ठामहे । किंतु बाधाभावेनेति वक्ष्यामः ।

( ४६४ । १४ ) अस्ति च जाग्रत्वप्रतीतेः बाधः ।

युक्तिपादव्युत्पादितन्यायशेषं लेशतो दर्शयिष्यामः। सिद्धार्थे संशयाभावात् । स्वप्न एवायं न जागरानुभूत इत्याद्युदयात् । ततो विकल्पप्रश्नोपीत्युक्तम् ।

( ४६४ । १६ ) ननु तत्र न युज्यत इति कोऽर्थः । न तावन्नोत्पद्यत इति । संशयविकल्पप्रश्नोत्पत्तेः प्रमितत्वात् । न चोत्पन्नोऽपि निष्कारण इति अकारणकार्योत्पत्तेः प्रमाण-विरुद्धत्वात् । नाप्यतत्कारणादुत्पन्न इति । यत उत्पन्न-स्तस्यैव कारणत्वेन व्याहतत्वात् । न चान्यदनुपपन्नत्वं अस्तीत्यत आह प्रश्नेति । प्रश्नदोषाहि चत्वारः स्वव्याहतिरस-ङ्गतिः । सिद्धार्थता च वैफल्यं न तैः स्यात्तत्वनिर्णयः । स्वव्याह-तिर्यथा वन्ध्या पुत्रवती न वेति । असङ्गतिर्यथा ईश्वरः सुखीत्युक्ते प्रपञ्चस्य क्षणिकत्वे किं प्रत्यक्षं प्रमाणमुतानुमानमिति । सिद्धार्थता तु प्रकृतैव घटः किं पटात् भिन्नोऽभिन्नोवेति । वैफल्यं यथा, काकस्याष्टौ दश वा दन्ताः इति । एतेषां अनुपपन्नत्वात् । अतो अप्रतिपत्तिविप्रतिपत्तिलिङ्गत्वादनुपपन्नमिति व्याहत्यादिकश्च प्रमाणस्तन्नप्रत्येति, विपरीतंच प्रत्येती-त्यनुमीयते । विकल्पप्रश्नो हि सन्देहमूलः । संदेहश्च समानधर्मदर्शनादिना निर्णायकाभावसहकृतेन भवति । समान-धर्माद्यभावे वा निर्णायकसद्भावेऽपि वा यः संदिग्धे विकल्पांश्च पृच्छति स नूनमविद्यमानमेव समानधर्मादिकं प्रतिपन्नश्च निर्णायकसद्भावमित्यनुमीयते ।

( ४६५ । ६ ) स्वव्याहतादिप्रश्नास्तत्वनिर्णविरोधिनः इति भावः । नहि सिद्धेप्यर्थे संदिहानः शतेनापि प्रमाणानां तत्वं प्रतिपादयितुं शक्यते । तत्रापि संदेहानिवारणात् । कथावसतिकारणं सर्वमपि निग्रहस्थानमिति शेषः । वादे किंचिद्-संभावितमेव । यथा विक्षेपादि तस्याज्ञानसंगूहनाद्यर्थत्वात् तत्वनिर्णिनीषोश्च तत्रानर्थित्वात् । किञ्चित्संभावितमप्यनु-द्भाव्यम् । यथा अननुभाषणादि । तस्योभयाभिलषितत त्वनिर्णयविरोधित्वेन तदुद्भावनस्य व्यर्थत्वात् ।(४६५ । १६)

किंचिदुद्भाव्यमात्रं यथा प्रतिज्ञाविरोधादिकं प्रकृतम् । तस्य तत्वनिर्णयविरोधित्वेन तदुद्भावनस्य त्याजनेन तत्वनिर्णयांगत्वात् । वा दा व सा न त्वा न्य त र स्य साधनदूषणयोः स्थितयोरन्यस्मिंश्च निरसाधनदूषणे सति भवति प्रश्ने तु पृच्छमानार्थस्य प्रष्टुः सिद्धत्वं दूषणम् । प्रतियोगिनस्तु सिद्धत्वं न्याय्यमेव । वाक्यार्थस्यप्रतिवा-दिसिद्धार्थत्वं दूषणमेवेति ।

( ४६४ । २६ ) एवं तर्हि ज्ञीप्सापूर्वकं वाक्यं प्रश्नः । न च ज्ञाते ज्ञीप्सा संभवति । अतः प्रश्नस्य व्याघातात्स्व-सिद्धार्थविषयत्वम् । उत्तरे तु प्रतिज्ञार्थस्य प्रतिवादिनः सिद्धत्वं दूषणम् । न च सिद्धं साधनमर्हति । प्रतिज्ञाव्य-व्याघातात् ।

यदि स्वसिद्धार्थप्रश्नकरणं न दूषणं स्यात्, तदा

प्रतिज्ञादिप्रसिद्धार्थप्रतिज्ञापि न दूषणं स्यात् अविशेषात् ।

( ४६६ । ९ ) आश्रयासिद्धिरनेकप्रकारा । असदाश्रयत्वं अभावाश्रयत्वमप्रतीताश्रयत्वं पक्षीकृताकारेणासत्वं सिद्धसाधनत्वं चेति । तत्राद्यपक्षद्वयं न दूषणं अभावस्य प्रामाणिकत्वात् सद्धर्मकत्वाच्च । असदाश्रयस्य कुतो दुष्टत्वमिति वाच्यम् ।

किन्नरविषाणमस्ति । विषाणत्वादित्यादेरपि साधनत्वप्रसंगात् । उतासतोनिर्धर्मकत्वेन साध्यधर्माश्रयत्वानुपपत्त्या बाधितविषयत्वेन । अथ साधनं धर्माश्रयत्वानुपपत्त्या स्वरूपासिद्धत्वेन । यद्वासतः सकलव्यवहाराभाजनत्वेन, यदिवाऽप्रामाणिकस्य प्रमाणागताऽसंभवेन । अथवा सदाश्रयस्य व्याप्त्यनुपपत्येति । नाद्यः । बाधितविषयत्वेन तस्य दुष्टत्वात् । न च सदाश्रयत्वेन कथमयं निर्णय इति चेत् । न चासदाश्रयत्वस्य दोषत्वे बाधितविषयत्वासंकीर्णमुदाहरणमस्ति । येन दोषत्वं प्रतीमः । न द्वितीयः । भावधर्माश्रयत्वाभावेऽपि अभावधर्माश्रयत्वोपपत्तेः अत एव न तृतीयः ।

( ४६७ । ४ ) ननु अभावोऽप्यसति कथं तस्य धर्माभावादिति चेन्न । धर्माणामनेकविधत्वात् । केचिद्धि धर्मिसमवेता भवन्ति । यथा रूपादयः। केचिदन्यसमवेता अप्यन्यमुपरंजयन्ति, यथा ज्ञानादयो घटादीनाम् । केचिदाश्रयसमवायमपि नापेक्षन्ते केवलं केनचिन्निरूप्यंते । यथा

अभावः । न च वाच्यमभावोऽपि तद्वत्यां निरूपणीय इति । प्रागभावाद्यनिरूपणप्रसंगात् । घटादेः कदाचित्सत्त्वान्नैवमिति चेन्न । तस्य निरूपणसमयेऽनुपयोगात् । प्रतीत्यानिरूपकत्वं इति चेत् । समं प्रकृतेऽपि । शब्दाभासादिना वन्ध्यासुतस्यापि प्रतीतिसंभवात् । न चतुर्थः । स्वोचितस्वकल्व्यवहारताजनकत्वात् । न पञ्चमः । अप्रामाणिकत्वेऽपि प्रतीत्याप्रमाणाङ्गत्वोपपत्तेः ।

दृश्यते वाऽसदाश्रयस्य दुष्टत्वं, वन्ध्यासुतो न वक्ता चैतन्यानधिकरणत्वात् । पाषाणवत् । वन्ध्यासुतो वक्ता सुतत्वात् संमतवत् इति । सप्रतिपक्षमेतदिति चेन्न । तदीयवाक्तात्पर्यस्य कदापि केनापि अनुवद्वत्वेन वाधितविषयत्वेन दुर्बलस्य प्रतिपक्षत्वात् । मूके नैकांतिकश्च सुतत्वहेतुः । अमूकत्वेन विशेषणे तस्य वक्तृत्वानतिरिक्तत्वेन साध्याविशिष्टता स्यात् ।

( ४६८ । ८ ) असिद्धं च सुतत्वं वन्ध्यासुतस्य । न चैवं स्ववचनव्याघातः । काल्पनिकानुवादेन वास्थवनिराकरणात् काल्पनिकस्य सुतस्य कथं पक्षत्वमिति चेन्न । निषेधं प्रतिपक्षत्वे बाधकाभावात् । अन्यथा परपक्षप्रतिक्षेपायोगात् । ( अत एव सदाश्रयस्य व्याप्त्यादिसद्भावात् न पञ्चमः )

( ४६८ । १५ ) यथा साधनस्य साध्यसाहित्यमात्रं न प्रामाण्योपयोगि । किन्तु निरुपाधिकमेव । अन्यथा सोपाधिकसाध्यसंबंधस्य मैत्रीतनयत्वादेरपि श्यामतासाधनत्व-प्रसंगात् । तथा व्यभिचारोऽपि निरुपाधिक एव असाधनत्वे हेतुः । यथा प्रमेयत्वस्य नित्यत्वेन । यदि सोपा-धिकोऽपि व्यभिचारो प्रामाण्यहेतुः स्यात्तदा विमतं भोजन-मिष्टसाधनं भोजनत्वात् ह्यस्तनभोजनवदित्यनुमानममानं प्रसज्ये-तेति । यदि व्यभिचरिणेदममानं स्यात् । तदा प्रमेय-त्वमिव व्यवहर्तुभिरमानतया निश्चीयेतापि । तथाच भोजने प्रेक्षावतां प्रवृत्तिर्न स्यात् ।

( ४६८ । २२ ) ननु व्यभिचारिसाधनं सन्देहमावहति सन्देहोऽपि भवति प्रवृत्तिहेतुरपि । सत्यम् । सन्देहः साशङ्कां प्रवृत्तिमुपजनयति न तु निरंकुशाम् । इयं तु निरंकुशा। सर्वानुभवसिद्धेति भवतीदमनुमानं प्रमाणं किंतु व्यभि-चाराभावदेवेत्यत आह । व्यभिचारोहीति । तत्र भोजनत्वादौ साधने साध्येष्टसाधनत्वव्यभिचारःस्फुट एव । क्वचिदनिष्ट-साधनत्वस्याप्युपलम्भात् ।

किं त्वपथ्यत्वाद्युपाधिनिबन्धन एव । न च पथ्य-त्वादिविशिष्टमेव भोजनत्वादिकं साधनमिति वाच्यम् । तस्य प्रवृत्त्युत्तरकालं फलानुमेयस्य प्रागसिद्धेः ।

एवमसदाश्रयत्वस्य हेतुदूषणत्वं निराकृत्य व्यधिकरण-

अतस्माऽनित्यः काकस्य काष्ण्यादीत्ययमपि हेतुः स्यादित्यति-प्रसङ्गाद्वा व्यधिकरणत्वस्य हेतुदूषणत्वमंगीकर्तव्यं व्याप्त्यभावाद्वा पक्षधर्मताभाव द्वेति । नाद्यः, तत्र व्याप्त्यभावात् । ( ४६९ । ७ ) व्याप्तिसद्भावे नातिप्रसङ्गः । कुत एतत् व्याप्त्याद्यंगसाकल्ये व्यधिकरणत्वमात्रेणासाधकत्वस्य काप्यनुपलंभात् । घटस्य कृतकत्वात् । शब्दोऽनित्यइत्यादौ दृष्टमिति चेत् । घटस्येत्येतद्धेतुविसेषणं न वा । आद्ये वैयर्थ्यम् । द्वितीये कथं असाधकत्वं । अथाऽनित्यत्वव्याप्तमपि कृतकत्वं घटवृत्ति न शब्देऽनित्यत्वं साधयतीति चेन्न । व्याप्त्यभावात् । न द्वितीयः असिद्धेः । न तृतीयः, पक्षधर्मतायाः अनावश्यकत्वात् । व्यधिकरणस्यापि साधकत्वे इदमुदाहरणं, रोहिण्युदये आसन्नकृतिकायाः उदितत्वात् । अत्र व्याप्तिः वक्तव्या । नदीपूरदर्शनेनोत्तरप्रदेशे वृष्ट्यनुमानं प्रत्यग्रशरावचक्रभ्रमदर्शनेन कुलालामत्यनुमानं चाशंक्य केनचिदुक्तं नोत्तरदेशोत्र पक्षः किं नाम नदी । तद्धर्मेणैव पूरेण तद्धर्मस्यैव वृष्टिमदुत्तरदेशसंबन्धस्य साध्यत्वम् । एवं शरावचक्रधर्माभ्यां प्रत्यग्रत्वभ्रमाभ्यां तद्धर्मस्यैव कुलालसत्तेरनुमानमिति । अत इदमेवोदाहरणं । नहि तथेह, रोहिण्याः कृत्तिकाया द्वौ द्वौ धर्मौ संपादयितुं शक्यौ। (४६९ १४) ननु इह अत्र पि कालं पक्षीकृत्य प्रयोक्तव्यं। विमतः कालः, रोहिण्युदयासत्तिमान्कृत्तिकोदयवत्कालत्वात् । अतीतकालवदिति । मैवं । (४६९ १४)एवं सति देशं कालंबादाय

सामानाधिकरण्यस्य सर्वत्रसत्वात् व्यधिकरणासिद्ध एव न स्यादिति व्यर्थं तत्परिसंख्यानं । एवमप्रयोगे व्यधिकरणत्वं सादकाश मिति चेन्न । तथा प्रयोगस्योक्तिदोषत्वेनार्थदोषत्वाभावात् । नचो क्तिदोषत्वमपि व्यधिकरणतयोक्तापि साध्यसिध्यंगत्वानुभवात् एव मेव हि लौकिकानामुक्तयः । परीक्षका अपि हि तत्प्रामण्य-मात्प्रामाण्यादित्यादि प्रयुन्जते । (४६९ १८) [व्य ति करम-पेक्ष लिङ्गस्य लिङ्गि ज्ञानजनकत्व नियमाच्च]। (४६९ २३) अ-विनाभावश्च क्वचिदेकाश्रयतयतामंतर्भाव्य भवति । यथा कृत-कत्वस्यानित्यत्वेन । क्वचिद्विभिन्नाश्रययोरेव । यथा धूमग्याग्नीना धूमाग्निना खलु न समवायवृत्यासमानश्रयो, नापिसंयोग— वृत्या । ऊर्ध्वाधोदेश संयोगित्वात्, धूमस्य अधोदेश संयोगस्य— असिद्धत्वात् । तथाप्येकपर्वतसंयोगिता द्वयोरस्तीति चेन्न। तथा सत्यग्न्यर्थिनो नियमेन प्रदेश विशेषे प्रकृत्यनुपपत्तेः । धूम एव धूमत्वेन मूलेऽग्निमान्साध्यत इति चेत्किमेषा लौकिकीप्रतितिः अहोस्वित्समयसिद्धये विपरिणामः क्रियते । न प्रथमः । लौकि काघूर्ध्वदेशं धूमवन्तमवलोक्याधोदेशं वन्हिमन्तमवगच्छन्ति । न द्वितीयः । निर्मूलत्वात् अपि च देहादीनां तावत्परेण क्षणिक ताऽवस्थीयते । वत्र पतन कर्मणा गूरूत्वानुमानमपि दुर्घटं स्यात् । न हि तयोः कालतः मामानाधिकरण्यं । कार्यकारण भावात् । नापि देशतः । विभिन्न द्रव्याश्रयत्वात् । तस्माद्यत्रेदं तत्रेदमिति-वद्यदेदं तदेदमितिवत् यदेदं तदेवमितिवच्च यदीदंव्याप्ति संभवात् । (४७० ९) व्यत्कदनुरोधेनैव हेतुसिद्धेरावश्यकतया पक्षधर्मता—

नावश्यकत्वाद्युक्तं व्यधिकरणस्यापि हेतुत्वमिति । साध्यविशेषणाप्रसिद्धेः कुतो दूषणत्वं । किं विश्वं सदसद्विलक्षणं बाध्यत्वादित्यादेरपि प्रामाण्यप्रसंगात् । उत साध्यविशेषणाप्रसिद्धौ तत्संदेहानुपपत्तौ पक्षत्वानुपपत्तेर्हेतोः पक्षधर्मत्वानुपपत्तिप्रसक्तेः । अथवा साध्य विशेषणाप्रसिद्धौ तेन साधनस्य व्याप्ति प्रतीत्यनुपपत्तिप्रसंगात् । यद्वा प्रतिज्ञावाक्यस्याप्रतीतपदार्थकत्वेनाबोधकत्वापत्तेः, ( बाध्यत्वानुमानस्य स्वव्याहतत्वेन दुष्टत्वात् ) नतु विशेषणस्याप्रसिद्धत्वेन आद्यं दूषयति । संभवतीत्युक्तेऽसत्वमुक्तं स्यात्सत्व प्रतिक्षेपरूपत्वादसत्वस्य । पुनरसन्नभवतीत्युक्ते, स्ववचनव्याहतिः । नैवमसन्नभवतीत्युक्त्या द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति सत्वंलभ्यते । पुनः सन्नभवतीत्युक्ते स्वव्याहतिरितिरेव । न च दोषान्तरासंकीर्णं साध्यविशेषणासिद्धेरुदाहरणं पश्यामो येन दोषत्वं प्रतीमः । (न द्वितीयः, संदेहानुभावे पक्षत्वानुपपत्त्यभावात् । अत एव न पक्षधर्मत्वासिद्धिस्तर्ह्येवेयं स्यात् ।) यदि धर्मी वा हेतोस्तद्धर्मत्वंवा नस्यात् । अन्यथा स्वार्थानुमान विशेष विलोपः स्यात्

यदा हि योधूमवानसाग्निमानिति ( ४७० २१ ) गृहीत व्याप्तिकोगिरिशिखरे धूमं सहसैव पश्यन् व्याप्तिं स्मरति । तदोत्पद्यतएवास्यानुमितिः ॥ न च तस्याग्निसंदेहोस्ति । यदा चाप्तवचनादिनिश्चितपर्वताग्निसंबंधः पर्वतं प्रत्यासीदन् धूममवलोकयति । तदापि तस्य विना संदेहे नाग्न्यनुमितिर्भवत्येव । नहि सामग्री बुद्धिमती । येन यन्मया

कर्तव्यं तदन्येन कृतमिति पर्यालोच्योदासीत । नापिपरार्थानुमाने संदेह नियमः । विपर्ययस्तस्यापि प्रतिवादित्वेऽपपत्तेः । अत एव सिद्धसाधकेऽसंगतएव नाश्रयसिद्धइत्युक्तं । किंच विदिततत्वोऽपि यदा परपरीक्षार्थं तत्र प्रमाणं पृच्छति । तदा प्रयुक्तमनुमानममानं स्यात् । संदेहाभावात् । तस्मात् संदिग्ध साध्यः पक्षइत्याद्याः प्राचांवाचः संभावनाभिप्रायाः । परमार्थतस्त्वनुमितिविषयएव पक्षः । अतः संदेहाभावे पक्षत्वानुपपत्यभावान्नाप्रसिद्धसाधने पक्षधर्मत्वासिद्धिरूपोदोष इति । न तृतीयः । साध्यविशेषणाप्रसिध्या व्याप्तिप्रतीत्यभावं । प्रसंजयतोऽव्याप्त्यभावः । तथाहि । केवलव्यतिरेक्यनुमानं प्रमाणं न वा । आद्ये तस्य व्याप्तिसद्भावो व्याप्त्यवगमश्चांगीकार्यः अन्यथा अनुमानत्वव्याघातात् । न च केवलव्यतिरेकिणि साध्यं प्रसिद्धम् । पक्षे प्रसिद्धौ सिद्धसाधनत्वात् । अन्यत्र प्रसिद्धौ तत्र हेतोर्वृत्तौ केवलव्यतिरेकित्वानुपपत्तेः । अवृत्तावसाधारण्यप्रसंगात् । अतः प्रसिथिलमूलः प्रसंगः । व्यतिरेकिणः क्वव्याप्तिः केनचावगम्यत इति चेत् । पक्ष एव साध्याभावस्य साधनाभावव्याप्तत्वेन लींगेनावगम्यत इति ब्रूमः । न केवलमस्माभिः किंतु तैरप्यंगीक्रीयते । यथाहुः (१४) नोपेयत्वमन्वयस्य व्याप्ते धामेऽपि तु उपायत्वमित्यादि ।नानुमेयेहि संप्रतिपन्न प्रमाणाभावात् । जीवच्छरीरं सात्मकं प्राणादिमत्वात् । भूः इतरेभ्योभिद्यते गंधवत्वात् । ईश्वरः सर्वज्ञः सर्व कर्तृत्वात् । इत्यादि केवलव्यतिरेकिणः तेषु सामान्यतोऽन्वय–

व्याप्तिरेवाभिधातव्या ॥ तथाहि । [१९] प्राणादिमत्वेन जीवच्छरीरस्य सात्मकत्वे साध्ये यद्यत्कार्यवत् तत्तत्कारणवत् यथांकुरवती भूमिः बीजगर्भेति । यथा गंधवत्वेन भुवोऽन्य-भेदसाधने यद्यदसाधारणधर्मवत् तत्ततो भिद्यते यथावादीति । [२३] यद्वा सामान्यतो विशेषण प्रसिद्धिं विधाय केवल-व्यतिरेकी प्रयोक्तव्यः । यथा ज्ञानतारतम्यं क्वचिद्विश्रांतं तारतम्यत्वादित्यनेन सामान्यतः सार्वज्ञसिद्धौ तस्येश्वरसंबंधः केवलव्यतिरेकिणा साध्यते । यथा चेछादयः क्वचियाश्रिताः गुणत्वात् रूपवत् । यश्चेछादिनामाश्रयः स एवात्मेति सामान्येना-त्मप्रसिद्धौ तत्संबंधो जीवच्छरीरस्य केवलव्यतिरेकिणा साध्यते ॥ (४७१ २६) ॥ क्वचित् पक्षैकदेशएव विशेषणप्रसिद्धिमाश्रित्य केवलव्यतिरेकी प्रवर्तते । (४७२ १) यथा पृथिवीतरेभ्योभिद्यते पृथिवीत्वान्नयदेवं न तदेवं यथा जलादीन्यत्र घटादावेव विशेषण-प्रसिद्धेर्नाप्रसिद्धविशेषणता । नचैवं । सपक्ष संभवेन केवलव्यतिरेकित्वभंगः । घटादेः पक्षैकदेशत्वात् । न च अंशे सिद्धसाधनता एकैकत्र प्रसिद्धावप्यापत्रमाणाराच भूगोलकादसिद्धेरिति । अभावो वा केवलव्यतिरेकिणा साध्यः । भावोहि प्रतिपाद्ये व्यतिरेकव्याप्तौ तदभावस्य प्रतियोगि प्रतीति अपेक्षत्वात् तया विशेषणप्रसिध्यपेक्षा अभावाभावस्यभावत्वेन प्रतियोगि निरपेक्षत्वात् (अत्रानात्मकत्वा-भावः साध्यते )। एतेष्वन्यतमस्याप्यभावेऽप्रसिद्ध विशेषणता दूषणमेव । एतन्नियमे क्रमाणाभावात् । तथाहि । किमनेनोक्ति-विशेषेण केवलव्यतिरेकिसाध्यमनयितां नीयते उत नेति वक्तव्यं ।

नाद्यः । उक्तेरर्थतथात्व परिवर्तकत्वासंभवात् । नहि सहस्रेणाप्युक्तीनां नरेऽश्वानरीकर्तुं शक्यते । शक्यत्वेवा केवलव्यतिरेकिप्रामाण्यंत्यक्तंस्यात् । न द्वितीयः उक्तिविशेषेणापि लींगस्याप्रसिद्धस्य साध्यस्य साधकत्वात् । ( तथा च किमनया सृष्टिकल्पनया । एवमेव वक्तव्यमित्यत्र प्रमाणाभावात् ) किंच परमाणुकारणकतां कार्याणामभ्युपगच्छतावैशेषिकादिना परमाणु सद्भावः साध्यते । यः परमाण्वादिकमभ्युपैति तं प्रति तत्सद्भावः साध्यते उत न संति परमाणव इति तदभावमभ्युपगच्छंतंप्रति । नाद्यः । सिद्धस्यसाधनायोगात् । द्वितीयेत्वबुध्यारूढस्य परमाण्वादेः साधनाय कथं वादिनः प्रयत्नः कथंचतदभावं परोमन्येत । प्रतियोगिनोऽविदितत्वात् । अथमन्यसे काणादाद्युपदेशेन सामान्यतो दृष्टस्वार्थानुमानेन वा स्वयमवगतं परमाण्वादिकं वादिना शक्यत एव साधयितुं । वादिवाक्येन च प्रतियोगिनः परमाण्वादेरवगमेतदभावाभिमतिः प्रतिवादिनोयुक्त्व । नहि प्रमाणेनैव प्रतियोगीज्ञातव्य इति नियमोऽस्ति । शशविषाणाद्यभावप्रतीत्यनुपपत्ति प्रसंगादिति । एवं तर्ह्यत्रापि तथैव भवतु प्रत्यक्षेणोपदेशेन वा साधारणधर्मानेकत्रोपलब्धवतः ततोन्यत्र सर्वत्रापि तदभावोपलंभसंभवे व्यतिरेकिव्याप्तिग्रहः तावद्वादिनः सुकर एव । प्रतिवादिनोऽपि वादिवाक्यादवगतप्रतियोगिनस्तदभावावगमसंभवात् व्यतिरेक व्याप्ति ग्रहः संभवत्येव । तथा प्रागुक्तरीत्यान्वयसमर्थनेनाप्रसिद्धसाध्यसाधने संभवति । किमेताभिः क्लिष्टकल्पनाभिः । एवं च न प्रतिज्ञावाक्यस्याविदितपदार्थकत्वप्रसंगः । वादिना तदर्थस्य

व्युत्पाद्यत्वादिति । व्यतिरेकिणानुमानपंचरूपता वैधुर्यादित्येतदपि न मानम् । परिशेषत्वानैकांत्यात् । तथाहि । शब्दस्यहि (४७३ । १४) पृथिव्याद्यष्टसंसर्गे प्रतिषिद्धे परिशेषात्तदतरिक्तद्रव्याश्रितत्वं सिध्यति । न च प्रागाकाशसिद्धेः पृथिव्याद्यतिरिक्तद्रव्यं सिद्धम् । येन तदाश्रितत्वं क्वचित् प्रसिद्धम् स्यात् । यद्यस्य कार्यं प्रमितं परेणांगं कृतंवा तस्य तत्कार्यतामंगीकुर्वाणं प्रति मिथः सिद्धिरुच्यते । न च कचित्कार्येनवस्थितासिद्धकारणपरंपरासिद्धा । सामान्यतः प्रसिद्धिस्तु केवलव्यतिरेकिण्यपि समाना । असिद्धसाधकत्वे न चैषां पंचरूपोपपन्नता नास्ति च । व्यतिरेकिनानुमानं पंचरूपता वैधुर्यादित्यनैकांतिक मिति । अनुमाने पंचरूपोपपन्नतानियमस्य निर्निबन्धनत्वादतादृशस्याप्यनुमानत्वे बाधकाभावाच्चाप्रयोजकोयं हेत्वाभासः । सपक्षे सत्वं विनाप्यनुमानत्वे भूर्नित्यागन्धवत्वादित्यादेरसाधारणस्याप्यनुमानत्वं स्यादिति चेन्न । सपक्षहीनस्य विपक्षव्यावृत्तिमात्रेण व्याप्त्यादिसिध्देः । असाधारणस्याभासत्वासम्भवतः । संमतौ वा सपक्षसद्भावासद्भावाभ्यां भेदसिध्देरिति । (४७४ : ३) तत्र केचिदाचक्षते । द्विविधं व्याप्यभावादि । वादिप्रतिवादिनोरन्यतरमतेनोभयमतेन चेति । अन्ये तु मन्यन्ते । अन्यतराव्याप्त्यादिकं नाम नास्त्येव । वस्तुविकल्पासंभवादिति । तत्रकिंतत्त्वमित्याकांक्षायामाह । व्यभिचार इति । न केवलमुभयपक्षे किंतु वादिप्रतिवादिनोरेकस्य पक्षेपि व्यभिचारो हेत्वसिध्दिश्च हेतोः

दूषणमेव । यद्यपि वस्तुतोन्यतरव्यभिचारादिकं न संभवति । तथापि प्रा वस्तुतन्वावधारणादाभिमानिकं संभवत्येव । तथाच हेतुसामर्थ्यसंदेहेप्यहेतुत्वमावश्यकमेव । व्याप्त्यादिमत्तया निश्चितस्यैव हेतुत्वादिति । साध्यवैकल्यं साधनवैकल्यं उभयवैकल्यमाश्रयहीनत्वमिति चत्वारः साधर्म्यदृष्टांतदोषाः । साध्याव्यावृत्तिः साधनाव्यावृत्तिः उभयाव्यावृत्तिः आश्रयहीनत्वमिति चत्वारो वैधर्म्यदृष्टांतदोषाः इति केचित् । तन्न । साध्यस्य साधनवैकल्यमेव च दृष्टांतस्य दूषणं नापरमित्यर्थः । उभयवैकल्यं तावत् पृथङ्गवाच्यत् । एकैकवैकल्येनैव दृष्टांतस्य दुष्टत्वे समुपितकल्पनावैय्यर्थ्यात् । अन्यथैकैकवैकल्यस्य दूषणत्वांगीकारभंगात् । संभवमात्रेण पृथग्वचनेऽनैकांतिककलातीतत्वंनाम हेत्वाभासांतरं वाच्यं स्यात् । आश्रयहीनत्वं चाश्रयासिद्धिसमानं । न पुनरेकविधमेवेत्याह । ( ४७४।२३ ) विशेषणविशेष्ययोरेकस्यासिद्धावपि विशिष्टस्यासिद्धरेव सिद्धा । दंडपुरुषयोः अन्यतराभावेऽपि दंडिनोऽभावदर्शनात् अतो विशेषणासिध्यादावपि विशिष्टहेत्वसिद्धेरवर्जनीयत्वाद्युक्तं तस्य हेतुदोषत्वम् । तच्चोभयान्यतरीत्या द्विविधमिति पूर्ववत् सिद्धमेवेति । असिध्दिश्च द्विविधा ( ४७४ । २६ ) स्वरूपतो अज्ञानतश्चेतिसूचनार्थं वक्ष्योपक्रमे प्रधानप्रमेयप्रश्नमपहाय योऽयं पृच्छति तत्रैवाप्रयोजनत्वम् । एवमसंगतिरपि सर्वथा संगत्यनुपलंभ एव दृष्टव्या । सिद्धप्रश्नादिकं यत्तदाधिक्यगतं भवेत् । अनुपपद्यमानदर्शनादुपपादकेबुध्दिरर्थापत्तिः ।

यथा जीवतोगृहाभावदर्शनाद्बहिर्भावबुध्दिः तत्र जीवतो गृहाभावस्यानुपपद्यमानतानामा किं सर्वथाऽसंभवः किंवा बहिर्भावेनविना अनवस्थानम् । आद्ये सर्वथासंभावितम् । दहनशैत्यमप्यनुमानाभासात् प्रतीतं किमप्यर्थं न बोधयेत् । तत्प्रतीतिः भ्रांतिरिति चेत् । सर्वथाऽसंभवतो गृहाभावस्यापि प्रतीतिः कथं न भ्रांतिः । दहनशैत्यस्योपपादकं नास्तीति चेन्न । ( ४७५ । १४ ) सर्वथाप्यसंभवतो गृहाभावस्यापि तदनुपपत्तेः । द्वितीये व्याप्तिरेव सेति व्याप्यदर्शनाद्व्यापकबुध्दिरर्थापत्तिरनुमानमेव । प्रमाणद्वयविरोधोनुपपत्तिरिति चेन्न । प्रकृतोदहरणे तदभावात् । जीवनस्य गृहाभावेनाविरोधात् । विरोधेर्थापत्तेरेवानुपपत्तेः । ( ४७६ । १ ) तस्माद्वै सादृश्यदर्शनवत्सादृश्यदर्शनमपि न पृथक् प्रमाणम् । अन्ये तु संज्ञासंज्ञिसंबन्धप्रमितफलमनधिगतसंगतिसंज्ञास्मरणसहायं तत्समभिव्याहृतातिदेशवाक्यार्थप्रत्यभिज्ञानमुपमानम् । ( ४७६ । ९ ) एतस्यां दशायामतिदेशवाक्यं व्याप्तिग्राहकत्वेनोपयुज्यते । यथा पृथिवीत्वाभिसंबन्धात् पृथिवीति व्यवहर्तव्येति लक्षणवाक्यं श्रुतवतः पृथिवीत्वाभिसंबन्धं क्वचित् द्रव्ये पश्यतो अनुमानेनैव संज्ञासंज्ञिसंबन्धप्रतिपत्तिरभ्युपगता । तथा प्रकृतेपीति कथमिदं उपमानं पृथक् प्रमाणं स्यादिति । ( ४७६ । १९ ) घटाद्यभावग्राहकं योग्यानुपलब्धिरूपंप्रमाणंपृथगेवेति मीमांसकाः । अनुपलब्धिलिंगकमनुमानमेव तदिति सौगताः । तदुभयमप्यनुपपन्नम् । प्रतियोगिस्मरणवतः पुरोवर्तिनि भूतले

घटाद्यभावस्य प्रत्यक्षेणैवादगम्यमानत्वात् । इन्द्रियान्वयव्य-तिरेकानुविधायिनोभावप्रत्ययस्याप्रत्यक्षफलत्वानुममत्तेः । अप-रोक्षाकारत्वस्यानुभवसिद्धत्वात् । बाधकाभावाच्चान्यत्रोपक्षय-कल्पनानुपपत्तेः । अन्यथा रूपादिप्रज्ञानेपि प्रमाणांतरक-ल्पनाप्रसंगात् । लिंगदर्शनव्याप्तिस्मरणादिविलंबेन विना झडिति जायमानस्यानुमानफलत्वानुपपत्तेः । लिंगस्य ज्ञातस्यैव करणत्वादनुपलब्धेरप्यभावत्वेनानुपलभ्यंतरापेक्षयामवस्थाप्रसंगाच्च । ननु च प्रातश्चत्वरगदौ प्रतियोगिस्मरणाभावेन गजाद्यभावमनुभूय देशांतरं गतो गजस्मृतिमान् प्रातश्चत्वरे गजो नासीदिति प्रतिपद्यते । न तत्र प्रत्यक्षस्यावकाश इत्यनुपलब्धिलक्षणं पृथक् प्रमाणं तत्रांगीकार्यमिति । मैवम् । तत्राभावस्या-प्रत्यक्षत्वेप्यनुपलब्धिलिंगकानुमानवेद्यताभ्युपगमात् । अनुप-लब्धेश्च स्मरणाभावलिंगानुमेयत्वात् । अत एव तत्र क्षणं ध्यात्वा नासीच्चत्वरे गज इति प्रतिपद्यते । स्मरणाभावो-प्यनुपलब्धंतरानुमेय इत्यनवस्थेत्यपि नास्ति । साक्षिग्रा-ह्याणां बुध्दिसुखादीनामभावस्य नियमेन साक्षिप्रत्यक्षवेद्यत्वादिति यतो खिलाप्रारंभाद्याः नियतव्याप्तयो यत्र प्रयुज्यते स तत्र प्रतिपाद्य इत्यादिरूपां व्याप्तिमपेक्षमाणा एव आगमार्थवसित्यर्थ. भवन्त्यतो युक्तय एवेत्यर्थः । ( एवं यो यत्र श्रूयते स एव तत्प्रतिपाद्यः । यत्र यस्य लिंग स तत्रेत्यादिरूपाव्याप्तिः । वाक्यादिष्वनुसंधेयाकुरुपांडवन्यायेन लिंगमुत्पत्तिरिति तत्र पृथग्वचनम् । ) जैनास्तर्के पृथक् प्रमाणमाहुः । (४७७।१६)

तत्र प्रसंगो नाम व्याप्यांगीकारेनिष्टव्यापकप्रसंजनम् । सोऽयं तर्कः न प्रमाणं किंतु प्रमाणानामनुग्राहकः । अनुग्रहश्च प्रमाणविषयसंभवानादिरूपः । तथाहि । भूतले घटः किं न स्यादिति विपरीतशंकया कुंठितशक्तिकं प्रत्यक्षं न तावत् घटाभावं निश्चिनुयात् यावद्यत्र घटो भविष्यत्तदा भूतलमिवाद्रक्ष्यत् तत्तुल्यदर्शनसामग्रीकत्वादितितर्केण विपरीतशंकानापनीयते । तर्को हि दुर्जनइव पराभिलषितं विछिद्य घटाभावं संभावयति । अथेदानीं प्रत्यक्षं सुजनइवस्वप्रमेयं निश्चिनोति । एवं क्वचिद्व्यभिचारशंकयोपाधिशंकया वा धूमवानपि पर्वतोऽग्निमान्माभूदिति पक्षे विपक्षशंकयानुमाने कुंठिते यदि निरग्निकः स्यात्पर्वतस्तदा निर्धूमोऽपि स्यादित्यादिरूपस्तर्कः प्रवर्तते । स हि उपाधिकोटौ तदायत्तव्यभिचारकोटौवाऽनिष्टमुपजनयन्विपरीतेच्छां विच्छिनत्ति । ततश्च निश्चिताविना भावमनुमानं निष्कंपमेवाग्निमत्वं निश्चाययति। तथा स्वर्गकामो यजेतेत्यत्र लिङाप्रतीयमानायाः भावनायाः भाव्यापेक्षयां किं भाव्यो धात्वर्थो भवतु भवतु वा स्वर्ग इति संदेहे समानपदोपात्तत्वाद्धात्वर्थ एव भाव्य इति शंकया कुंठितशक्तिः शब्दजोपमेवास्ते । ( ४७७ । २४ ) यदि धात्वर्थोभाव्यःस्यात्तदा विधेरिष्टाभ्युपायत्वं शास्त्रस्य च तद्बोधकत्वं तत्प्रणेतुश्चाप्तत्वं प्रेक्षावतां प्रवृत्तिश्चेत्येतत्सर्वं न स्यादिति तर्केणापनीयतां शंकायां शब्दः स्वर्गमेव भाव्यतयावधारयति । सोयं प्रमारूपं वा प्रमाणं स्यात् लिंगदर्शनवत् अप्रमारूप

वेंद्रियादिवत् । न तावदाद्यः । तस्याऽऽहार्यरूपत्वात् । तत्कारणमपि न प्रमाणं प्रमाफलत्वाभावात् । न द्वितीयः । ( ४७८ । १ ) आरोपिततिपयत्वात् । विपर्ययप्रामाण्योऽगतौ तु तेनास्य नियामकः संबन्धो नास्ति । असंबन्धस्य गमकत्वे चातिप्रसंगः । अनुमानत्वे चास्यापादकं लिंगं आपाद्यं साध्यमिति वक्तव्यम् । न च युक्तम् । आपादकस्याहार्यत्वेनान्यतरासिद्धत्वात् । आपाद्यस्य चानिष्टत्वे न बाधितत्वात् नह्यसिद्धं लिंगं भवति । नापि बाधितं साध्यम् । सति ह्याश्रयेनुमानं भवति । न च भूतले घटोस्ति यः साध्यसाधनयोराश्रयः स्यात् । व्यधिकरणताचापाद्यापादकयोः बहुलमुपलभ्यते । आपाद्यस्य साध्यत्वे अपसिद्धांतश्च स्यात् । भूमसद्भावस्य स्वयमभ्युपगतत्वात् । तस्माद्विपर्ययपरतंत्रत्वादप्रमाणमेव प्रमाणानां अनुग्राहकस्तर्क इति। ( अत्रोच्यते । द्विविधं ह्यनुमानम् । साधनानुमानं दूषणानुमानं चेति ) तत्र साधनं उभयवादिसिद्धैरेव न्यायैः कार्यं नान्यतरमात्रसिद्धैः । क्वचित्पुनः साधनं स्वमात्रासिद्धैरेव न्यायैः क्रियते । यथा शब्दो न द्रव्यं श्रोत्रग्राह्यत्वात् । सामान्यवदिति । द्वितीयं तु परसिद्धैरेव न्यायैः कार्यम् । यथा यदि पर्वतो निरग्निकस्तदानिर्धूमः स्यादिति । अत्र ह्यापदकस्य परसिद्धत्वमेव भाव्यम् न स्वासिद्धत्वम् । तदतिरिक्तांगानां तु स्वसिद्धिः सत्यस्तीवा न विवक्षितापरसिद्धिरेवोपयुज्यते । तदेव च तर्क इति व्यवह्रियते । तेन

तत्राश्रयासिध्यन्यतरासिद्धी भूषण एव न दूषणे। व्यधिकरणत्वं तु ( ४७८ । १८ ) न क्वापि दूषणमित्युक्तम् । शक्यसंपादनं च तर्केऽपि सामानाधिकरण्यम् । तर्कः स्वां रीतिं विहाय नान्यां रीतिमवलंबते । अन्यथा केवलान्वयिधर्मस्य केवलव्यतिरेकित्वाभावात्। तस्यानुमानत्वापत्तेः । सामान्यलक्षणसद्भावात् । विशेषलक्षणाभावेपि न दोष इति चेत् समं प्रकृतेऽपि । व्याप्त्यपेक्षयागमकत्वस्य तर्केपि विद्यमानत्वात् । (४७८ । २० ) (अत्र अन्वयो न दृश्यते) अपादानरूपे तर्के अपसिद्धान्तो न दूषणम् । तर्हि भूमाभावोप्यंगीकर्तव्य इत्यापादानात् । न च तद्प्रमाणादिविरुद्धः । अत एवापादकासिद्धिरपि न निराग्निकत्वेनांगीकारस्य सिद्धत्वात् । तस्यैव सिद्धिशब्दार्थत्वात् । ) न चायमसिद्धः । तथा सति तर्कस्याप्यनुत्थानापत्तेः । न च तर्कस्य तत्संभवति । परसिद्धेन हि न्यायेन परस्य तत्र दृष्टिर्ज्ञापनीया । ( ४७९ । १० ) न चासौ साधुः। तथात्वे हि परसिद्ध इत्येव न स्यात् । असाधुना च ज्ञाप्यमाना दृष्टिराभासभूतैवेति कथं तर्कोनुमानमित्यतच्छलजात्योर्दुष्टत्वमूलव्युत्पादनेनैवैतत्समानयोगक्षेममित्याशयवांस्तत्स्वरूपं निरूपयति। छलमिति । जातिं वा छलं वा प्रयुंजानो दुष्टमेतदिति कथं प्रतिपादनीय इति वाच्यम् । जातौ तावद्युक्तांगहीनत्वादयुक्तांगाधिकत्वादविषयवृत्तित्वाद्वा दुष्टमेतदिति । छले च मदविवक्षितदूषणासंगतत्वादित्येवमिति चेत् ।

( ४७९ । १९ ) तत्र जातिवादीनेदमयुक्तागमिति वा नेदं अयुक्तमिति वा नायमविषय इति वा प्रतिब्रूयादेव । छल-वादी च किंत्वद्विवक्षया त्वद्वचनेन प्रतीतोर्थो मया दूषणीय इति । तौ कथं दुष्टत्वं प्रतिबोधनीयौ । अथ मन्यसे । द्विविधं दुष्टत्वमूलं साधारणमसाधारणं चेति । तत्र साधारणं युक्तांगत्यागादिकम् । साधारणं तु स्वव्याहतिः । तत्रासाधारणदूषणोपन्यासेपि पुनः शंकमानः स्वव्याहत्या बोधनीयः । यदि व्याप्यांग्रंगमनपेक्ष्यैवप्रसंगस्तदा जातिवाक्यार्थोपि तथा दूषयितुं शक्यत इत्यादि । यदि च वक्तुर्विवक्षामनपेक्ष्यैव शब्दप्रतीत्वमात्रेण दूषणम् । तदा छलवाक्येपि तथा शक्यमिति । एवं तर्हि परसिध्देनैव न्यायेन परच्छलजात्योर्दुष्टिं बोधनीयः । ततःपरं तु न शंक्य एव । व्याघातावधित्वादाशंकाया इत्युक्तं भवति । ततश्च परन्यायस्तावदसाधुः । ( ४७९ । २५ ) तेन बोध्यमानादुष्टिराभासभूतैवेति छलादेः वास्तवमदुष्टत्वं स्यात् न स्यात् । न ह्यत्र परन्यायः प्रमाणत्वेनौपन्यस्य ते किंत्वसाधूरयं त्वदीयोन्यायो यतः स्वात्मानमपि व्याह-न्तीत्यभिप्राय इतिचेत्तुल्यमेतत्प्रकृतेपि । नह्यत्रापि निर-ग्निकत्वं प्रमाणतयोपन्यस्यते अपित्वसाधुरयं त्वदीयो निरग्निकत्वांगीकारः । यतः प्रमाणविरुध्दं निर्धूमत्वमप्यं-गीकारयतीत्यभिप्राय इति । जात्यादौ विरुद्धापत्तिः । तर्के तु प्रामाण्यविरुद्धापत्तिरिति वैलक्षण्यमत्रम् । अस्ति च स्वविरुद्धापत्तिरंततस्तर्केपि । यथोक्तम् । व्याघातावधिरा-

शंक तर्कः शंकावधिर्मत इति । (४८० । ३) सदसद्विलक्षणं संघं कात र्न्येनानभिव्यक्तत्वादित्यनुमाने किं सच्छब्देन विवक्षितं किमब ध्यममभिधीयते उत ब्रह्मस्वरूपमपि तद्धर्मविपरीतधर्मत्वं वा तत्प्रतियोगिक.न्योन्याभावो वा तत्वानधिकरणत्वं वा । (४८० । १५) [ उभयपक्षेपि उक्तप्रकारत्रयस्य वैलक्षण्यस्यासंभवात् । अबध्यस्य च ब्रह्मानतिरिक्तत्वेन च तस्य च निर्धर्मत्वेनांगीकारात् । भावप्रत्ययस्य च धर्मवाचित्वाच्च बाध्यत्वानधिकमणत्वसाधने साध्याविशिष्टत्वं च स्यात् । (४८० । २२) अथ सच्छब्दोऽबाध्यार्थो वैलक्षण्यं च तत्वानधिकरणत्वं तर्हि बाध्यमिति प्रतिज्ञार्थः स्यात् । तस्य च कात्र्न्येनाभिव्यक्तत्वं च तदेवेति साध्यहेत्वोर्भेदो न भवेत् । (४८१ । २) ब्रह्मणः प्रतियोगित्वादि यदि मिथ्या स्यात्तर्हि तो ब्रह्मणः स्वाप्नप्रपंचस्य वैलक्षण्यमुक्तविधं न स्यात् । यस्य यदपेक्षया न प्रतियोगित्वं न ततस्तस्य वैलक्षण्यमपि । यथा तत एव घटात्तस्यैव व्याप्तिस्तनार्थो हि शब्दः । : मिथ्याशब्दोऽनिर्वचनीयवचनो नास-द्वचनइति तु प्रागनिर्वचनीयासिध्देः दुर्वचनम् । ननु च वैलक्षण्यं न स्यादितीदमिष्टापादनम् । मया तस्यापि मृषात्वांगीकारादिति चेन्न । यदि स्वाप्नप्रपंचस्य ब्रह्मवैलक्षण्यं मृषा स्यात्तदा तदविलक्षणत्वं सत्यं स्यात् । घटादौ तथा दर्शनात् । न चैतदंगीकर्तुं उचितं अपसिद्धान्तापत्तेः । ( किंच यद्विलक्षणत्वं सत्यं स्यात् ! तर्हि ब्रह्मणो मिथ्यात्वं

स्वप्नस्य वा सत्यत्वं स्यात् ) । (४८१ । १०) उपलब्धं हि घटस्य घटांतरेण सालक्षण्यसद्भावे पार्थिवादिसाम्यम् । अत्र सामान्येन विशेषापादनान्नापाद्यापादकयोरभेदः शंकनीयः । भावत्वे द्रव्याद्यन्यतमत्वापत्तिरिति यथा ब्रह्मप्रतियोगिकं । स्वप्नस्य सालक्षण्यं सत्यंचेद्ब्रह्मणोपि मिथ्यात्वं स्यादित्यसंगतम् । यत्र सालक्षण्यं तद्भवति व्याप्तेः सुग्रहत्वान्नवै व्यधिकरणं च । ननु सधर्मके हि वस्तुन्येकस्य धर्मस्याभावेन तद्विरुद्धस्य धर्मस्य भावोभावे न च अभावो शक्यते वक्तुम् । न च निर्धर्मिकब्रह्मणि विलक्षणत्वस्वदति लक्षणत्वमपि संभवति । यथा काष्ठे वक्तृत्वमवक्तृत्वं च । एवमसत्यस्यापि वैलक्षण्यं सालक्षण्यं च वस्तस्तर्कमेवमापादनमिति मैवम् । यदि ब्रह्मनिर्धर्मिकं स्यात् तर्हि तज्जिज्ञास्यं नैव स्यात् । भवति च जिज्ञास्यं अथातो ब्रह्मजिज्ञासेति वचनात् । अतो न तन्निर्धर्मकमिति । (४८१ । २१) विचारो हि जिज्ञासा नाम । स च व्यापकधर्मदर्शनम् । शशविषाणवन्निर्धर्मके कथमसौ स्यात् । नखल्वनुमान विचारापरपर्याया जिज्ञासया वस्तुस्वरूपमात्रं ज्ञानं प्रयोजनम् । तस्य प्रागेव सिद्धत्वात् । असिद्धौ चाश्रयासिद्धस्यानुमानस्य अनुत्थानात् । किं नामेदमिति स्वरूपानुवादेनैवमिति व्यापकधर्मविशिष्टधर्मिज्ञानम् । धूमानुमानादौ तथा दर्शनात् । तथाच कथं निर्धर्मकस्य जिज्ञास्यं ति । एतेन स्वप्नेपि प्रसंगानवकाशो निरस्तः । तथाहि मायावादाभिमतमित्यनुमाना-

मानासंसदत् । आरोपिताभ्यां व्याप्यव्यापकाभ्यां तत्संभव इति देन्न । ( ४८२।१ ) स्वरूपासिद्धिवधप्रसंगादिति । यदि धर्मान्तरनिवृत्त्या धर्मान्तरनिवृत्तिः मीमांसया ज्ञाप्यते । तथापि सद्धर्मत्वमपरिहार्यं व्यावृत्तिमतःस्यैव धर्मत्वात् । तदभावे व्यावृत्त्यंतरस्य तन्निष्ठतयानुमातुमशक्यत्वात् । न हि (खलु) निराधारया कस्यचिद्धर्मस्य निवृत्त्या निराधारैव धर्मांतर-व्यावृत्तिरनुमातुं शक्या । तथानविधिरूप एव धर्मः । किं नेमेत्थंभावमात्रं प्रकृतमिति । तदनेन ब्रह्मनिर्धर्मिकं जिज्ञास्यत्वात् पर्वतवदित्यनुमानं च सूचितं भवति । इत्थं भावात्यकान्धर्मानाहश्च श्रुतयोखिलाः । सत्यकामः सत्यसंकल्पः य आत्मा अपहतपाप्मेत्याद्याः । सूत्रं च अदृश्यत्वादि-गुणको धर्मोक्तेः । गुणशब्दश्च धर्मवचनः न पारिभाषिकवचनः । अदृश्यत्वादीनां तदभावात् । नन्वस्पांभिर्भावरूपा एव धर्माब्रह्मणो नांगीक्रियन्ते अभावात्मकास्तु स्वीक्रियन्त एव । अतो न सूत्रविरोध इत्यत आह । यदीति । यद्यभावधर्माः प्रमाणबलादंगीक्रियन्ते तर्हि भावधर्माश्रयः सर्वज्ञ इत्यादि श्रुति-बलादंगीकार्यः । ( ४८२ । १२ ) यद्यत्र नेहनानास्तीत्यादि श्रुतिविरोध इत्युच्यते सोदृश्यत्वाद्यंगीकारेऽपि समानः । ननु सर्वज्ञत्वादयः सर्वनिरूप्यत्वात्सर्वापेक्षाः विषयादिकं च सर्वं च भ्रांतिसिद्धमसत्यमेव । अन्यत्यसापेक्षास्तु कथंपरमर्थातो ब्रह्म-धर्मतया स्वीकर्तुं शक्यन्त इत्यत आह । अन्येति । ते सर्वज्ञत्वादयोन्यापेक्षा इति यदि नांगीक्रियन्ते तर्हि ते

अदृश्यत्वादयोपि न दृश्यमदृश्यत्वमित्येवमन्यापेक्षाः स्युरिति नांगीकार्या एव । विषयत्वेन वा प्रतियोगित्वेन वान्यापेक्षत्वमिति तु दैपल्यमात्रम् । किंच ब्रह्मणः सत्तापि नांगीकार्यं स्यात् । तस्य अपि देशकालसापेक्षत्वात् । ( ४८२ । २२ ) तथाच सदेव सौम्येत्यादिश्रुतिविरोधः । ननु सत्तादेशकालसापेक्षति कोऽर्थः तत्संबन्धेति वा जन्येति वा । नाद्यः । साधनमात्रेण तदपेक्षाऽसिद्धेः । नहि गगनं घटे न संयुक्तमित्येतावता तदपेक्षम् । न द्वितीयः । अनादिनित्यत्वादिति चेदेवं तर्हि सार्वज्ञादेरपि नान्यापेक्षता । नहि सर्वेण सह विषयविषयिभावमात्रेण सर्वापेक्षत्वं सौरप्रकाशस्यापि घटापेक्षताप्रसंगात् । न च सर्वेण जन्यत्वम् । नित्यसिद्धत्वात् । ननूक्तौ सार्वज्ञादेः सर्वापेक्षताभावेपि ज्ञप्तौ सर्वापेक्षास्तीति चेत् । तर्हि समं प्रकृतेऽपि । देशकालप्रतीत्यनपेक्षायाः कापि प्रतीतत्वात् तदपेक्षाया एव प्रतीतत्वाच्च । अभूद्भवति भविष्यतीत्यादि प्रतीतिमनभूय सत्ताया अप्रतिभासात् । किंच ब्रह्मणि धर्माभावे शास्त्र प्रतिपाद्यं न किमपि स्यात् । ( ४८३ । ७ ) स्वरूपं तावत्स्वप्रकाशत्वान्न शास्त्रप्रतिपाद्यम् । संसर्गभेदयोरेव वाक्यार्थत्वाच्च धर्मास्तु न संति । येन संसर्गभेदौ शास्त्रविषयौ स्यातामस्य तत्म् । तस्मादस्य ब्रह्मणः किं शास्त्रेण विगम्यते न स्वरूपं नापि धर्मसंसर्गादीति । ( ४८३ । १० ) ब्रह्मणि मपरार्थतो धर्माभावेऽपि मिथ्याभूताधर्माः शास्त्रस्यविषया

भवन्ति । तर्हि विपरीतबोधकत्वलक्षणमप्रामाण्यं स्यात् । वेदान्तानां विषयाभावेन प्रसक्तमबोधकत्वलक्षणप्रामाण्यं परिहर्तुं अंगीकृतं मिथ्याधर्मप्रतिपादकत्वम् । विपरीतबोधमत्वलक्षण-मप्राप्यमेवापादयति । इयांस्तु विशेषः । अबोधकानामु-पेक्षणीयतैव केवलं विपरीतबोधकानां तु हेयतास्यादिति । वेदो निषेधार्थे मिथ्याधर्मान्यः सर्वज्ञः सर्वविदित्यादिवाक्यं प्रतिपाद्य नेहनानास्ति इति निषेधत्यतो न दोष इति चेन्न । परस्परविरुद्धत्वेन उन्मत्तवचनवदप्रामाण्यप्रसंगात् । वेदो धर्मान्विधाय स्वयमेव निवेधयतीत्यतो न दोष इति चेन्न । अप्राप्तत्वे नानुवादायोगात् । न हि ब्रह्म वा तद्धर्मा सर्वज्ञादयः वेदं विना न वेद्या भवेयुः । अनुमानवेद्या ब्रह्मधर्मा इति चेन्न । तस्य प्रत्यनुमानादिनापस्ततत्वात् । अन्यथाति-प्रसंगात् । ननु मिथ्याधर्मविधातुश्च वेदस्यैवाप्रामाणतेति यदुक्तं तन्नानिष्टम् । तत्र जीवब्रह्मणोरैक्यं प्रतिपादयंस्त-त्त्वावेदको परो तत्त्वावेदक इत्यस्माभिरंगीकारात् । मैवम् । अपौरुषेयवेदे स्वतःप्रमाणभूते च एकस्य भागस्याप्रामाण्ये परस्यापितत्स्यात् । अस्य भागस्य तद्वत्प्रामाण्यं वा कथं न भवेत् । तात्पर्याद्वेदोपि न कल्पनीयः । एकवाक्य-त्वाभावप्रसंगात् । एकेन भागेन उपासनार्थविद्यमानपि सार्वज्ञादिनिरूप्यते । उपासनया शुद्धबुद्धेरैक्येनिष्ठाभवतीति चेन्न । प्रतिकूलत्वात् । सगुणोपासनया भेदवासनैव दृढतरा स्यात् । ( ४८४ । ३) यदुक्तं ब्रह्मणि धर्माणां अप्रा-

प्तिरिति तन्न । प्रमातो प्राप्तावत्पारोपस्तत्संभवात् । मैवम् । यत्रारोपस्तत्र पूर्वं प्रधानदर्शनं ततः इदंतविशिष्टं वस्तुदर्शनं तस्मिन् प्रधानसाधारणधर्मस्य शुक्लभास्वरत्वादेः दर्शनं अधिष्ठानस्य पुरोवर्तित्वादिदर्शनं चावश्यकम् । ( ४८४ । १३ ) तथाच धर्मारोपस्य प्रधानदर्शनादिकं व्यापकं उपलब्धम् । न च प्रकृते तदस्ति । सार्वज्ञादीनामपहतपाप्मत्वादीनामन्यत्रानभ्युपगमात् । ब्रह्मणि च प्रधानसाधारणधर्मादेरनंगीकारात् । अतो व्याप्यस्य धर्मारोपस्याभाव इति । ( ४८४ । ९ ) शुक्तिकायां रजतत्वधर्मारोपो हि न शुक्तिकावभासमात्रेण भवति । किंतु प्रधानादिदर्शन एव । तथा स्फटिके लौहित्यादिरोपोपि वस्तुतो लौहित्यवतो जपाकुसुमस्य स्फटिके चेदंतादेः प्रधानसन्निधानस्य च दर्शन एव दृष्ट इति । उपाधिव्यतिरिक्तानुमानबाधितेति कथमेतत् नास्त्येव तथाप्रतीतिः । व्यवहारस्तूपचारः । यथाकर्दमलिप्ते पटे कृष्ण इति व्यवहारः व्यवहारलिंगात्तथा प्रतीतिरस्तीति । साधने पटे इष्टे व्यवहर्तरि व्यभिचारः । तथास्यापि तथाप्रतीतिरस्तीति चेन्न । ते च पूर्वपटादौ शौक्ल्यस्य ज्ञातत्वात् । ( ४८९ । १२ ) ननु कृष्णं वस्त्रं स्वतः शुक्लेपि वस्त्रे कर्दमोपाधिकमिति नौपचारः । कार्ष्ण्यसद्भावेन प्रतीतिसंभवादिति चेत् । किमिदमौपाधिकं नाम साधनाभिमते व्याप्तिरिव कर्दमसन्निधानादारोप्यमाणमिति चेन्न । आरोपासंभवस्योक्तत्वात् । यद्वा उपाधिना वस्त्रेति व्यक्तं अथवा उपाधिकृतमिति । नाद्यः । सादृश्याद्यभावे

नारोपासंभवात् । न द्वितीयः । वस्त्रस्यास्वच्छत्वेन प्रतिफलनासंभवात् । न तृतीयः । ( ४८९ । १५ ) प्रागवस्त्रे कार्ष्ण्यसद्भावे मानाभावात् । चतुर्थे पृच्छामः । किं कर्दमः शौक्ल्यं निवर्त्य कार्ष्ण्यं वस्त्रेकरोति । उतानिवृत्त्यैव । नाद्यः । कर्दमापगमे शौक्ल्यानुपलब्धिप्रसंगात् । न च पुनः शौक्ल्यमुत्पन्नम् । कारणाभावात् । न द्वितीयः । युगपद्रूपद्वयाधिष्ठानविरोधात् । औपाधिकस्यापि सत्यत्वेन स्वाभाविकाविशेषात् । मंचाः क्रोशंतीत्यादिव्यवहारे वा व्यभिचारस्त्वपरिहार्यः । ( ४८९ । २३ ) वस्त्रे खलु कार्ष्ण्यं कर्दमोपाधिकृतं प्रतीयमानमेवं प्रत्येतव्यम् । स्वतः शुक्लमेवेदं वस्त्रं न कृष्णम् । कार्ष्ण्यं तूपाधिकृतमिति तथात्रापि स्वतो निरूप एवाहम् । कार्ष्ण्यं तु न मम स्वभावः । किंतु देहोपाधिकमिति प्रतीयत इत्यंगीकर्तव्यम् । तथा चास्याः प्रतीतेः यथार्थत्वान्नानुमानादितो बाध इति । किं च सर्वप्राणिभिर्भेदादेरात्मभेदेनानुभूयते । तथा हि । जातमात्र मृगाद्याः स्तनपानादौ प्रवर्तते शंकादिना नयनांतः कंडूयनानादीनि दुःखकारणानीति विजानते । अत एव सिंहादिध्वनिमात्रेण पलायंते मात्रादिनि चोपसर्पति । रागद्वेषयोरेव प्रवृत्तिनिवृत्तिकारणत्वेनास्मदादौ निर्णीतत्वात् रागद्वेषाभ्यां चेष्टानिष्टसाधनत्वज्ञानम् । तयोरेव रागादिकारणतया निश्चितत्वात् । न च तज्ज्ञानं प्रत्यक्षसाध्यं । कार्यकारणभावस्यातींद्रियत्वात् । किंत्वनुमानोपदेशसाध्यं ।

न च मृगादिनामुपदेशः संभवति । अनधिकारात् । ततः पूर्वजन्मनि सिद्धस्योपदेश इति वाच्यम् । न चाऽस्मृतोसौ तत्कारणमिति तत्स्मृतिसद्भावोंगीकार्यः । अनुमानपक्षेपि यद्यत्स्तनपानं तदिष्टसाधनं यदिष्टसाधनं न भवति तत्स्तनपानं न भवति । यथा मुखम् । स्तनपानं चेदमित्यन्वयादिस्मरणेन विना न भवति । न ह्याननुभूते स्मृतिरुपपद्यते । ( ४९० । २२ ) अतो जन्मांतरानुभूतान्वयादिस्मरणमेष्टव्यं समानयोगक्षेमत्वात् । नचेदेहांतरस्मरणं मृगादीनां तदविशिष्टान्वयादिस्मरणमपि न स्यात् । तदभावे चानुमानाद्यभावेनेष्टानिष्टकारणताज्ञानं नोत्पद्येत । तदनुत्पादे च रागाद्यनुत्पादात् प्रवृत्त्याद्यनुपपत्तिरापद्यते । कारणाभावे कार्याभावस्य सुलभत्वात् । अदृष्टवशात्प्रवृत्त्यादीति चेन्न । दृष्टातिक्रमदोषात् । एतावांस्त्वदृष्टस्योपयोगो यज्जन्मांतरानुभूतम् । सर्वमस्मरन्नेतावत्स्मरति । यादृच्छिकं प्रवृत्त्यादिर्भवत्विति चेन्न । अनंतानां तदनुपपत्तेः । अस्तु जातिस्वभावोयम् । न । भिन्नजातीयानामप्युपलंभात् । यदैव तद्देहवर्तिनो मम न केवलमयमेव देहः । किं तु तत्प्रागन्योप्यभूदिति देहांतरस्मरणमापतितम् । तदैतद्देहेन स्वस्यैक्यावसायः कुतः स्यात् । किं त्वनेकमणिष्विवैकं सूत्रमिवानेकदेहानुस्यूतमात्मानं पश्यतः स्वस्य ततोत्यंतभेदावसतिरेव युक्ता । तथाच कार्श्यादीनामसंसर्गज्ञानमपि सुस्थमेव । परेण देहाद्यारोपनिबंधनत्वाभ्युपगमात्तदारोपस्य । अहं प्रत्ययस्तु गौण इति प्रागेवोक्तम् ।

अतो मम देह इति प्रत्ययो नान्यथयितव्यः । कृष्णोऽहमित्यादिश्चोपचारोंगीकरणीय इति । तत्कथमुपचारः । नहि मुख्यार्थलाभमात्रेणासौ संभवति । सादृश्यसंबन्धप्रयोजनादेः अप्यपेक्षितत्वादिति चेन्न । अत्राप्यात्मनः शरीरव्याप्तत्वादस्ति तावत्संबन्धः । सादृश्यं चैकदेशत्वलक्षणं संबन्धोप्यभिहितः ( ४९१ । १४ ) रूढत्वाच्चैतेषां व्यवहाराणां न प्रयोजनापेक्षेत्याशयेनोक्तं अंगारवन्हिवदिति । भेदज्ञानेप्यात्मनो देहव्याप्तत्वादंगारवन्हिवल्लोकानां व्यवहारेष्वपाटवादत्यंतविविक्तवेदनेऽसामर्थ्यात् पुराणादिव्यवहाराश्च स्वाविविक्तवद्भवन्ति । यथांगारे व्याप्तवन्हित्वात् तथा व्यवहारएवमत्रापि दृष्टं हि लोके विवेकज्ञानवतोर्मातापित्रो रमलयोः विवेकज्ञानकारणं व्यवहारापाटवम् । अत एव विशदविवेकाभावापेक्षया 'नैषां ममाहमितिधीः श्वसृगालभक्ष्ये' इत्यादिवाक्यप्रवृत्तिः । अत एवोपदेशश्च सार्थकः देहात्मभेदविवेकिनोऽपि स्नेहादेव देहानुकूलप्रतिकूलयोः रागद्वेषौ यथा गृहादौ ।

( ४९१ । २५ ) ननु प्रत्यक्षविरोधस्त्वागमादेः नास्ति भिन्नविषयत्वात् । आगमादिकं खलु आगामिनं विश्वस्य बाधं प्रतिपादयति । न त्वधुनातनम् । स एव मिथ्यापदवेदनीयः । तस्य च प्रत्यक्षविरोधस्तदा स्यात् । यद्यागामिनमपि विश्वस्य बाधं प्रत्यक्षं प्रतिक्षिपेत् । न चैवम् । तस्य वर्तमानग्राहित्वेनागामिबाधाभावग्रहणे सामर्थ्याभावात् । ( ४९२ । ५ ) अस्तुवागामिबाधबोधकत्वमागमादेस्तथापि

बाधो नाम त्रैकालिकसत्तानिषेधः । स च वर्तमानकालीन सत्ताग्राहिणा प्रत्यक्षेण विरुध्यत एवेति तत्प्रतिपादकस्य आगमादेः कथं न प्रत्यक्षविरोधः । साक्षिप्रत्यक्षं तावत् वर्तमानमात्रगोचरं प्रमाणांतराणां प्रागेव दूषितत्वात् । ४९२ । १५ ) मोक्ष इत्यवगमाभावे च तदर्थः प्रयत्नो न स्यात् । मोक्षे सर्वस्य बाधो भविष्यतीत्येतदपि न स्यादिति । शुकवामदेवादयोऽनेन मुक्ता अभूवन् अहमपि मुक्तो भविष्यामीत्यवगतिरागमादेव भविष्यति । किमत्र साक्षिणोतीतानागतार्थगोचरत्वेनेत्यत आह । आगमोपीति । वाक्यं तावत्पदार्थसंसर्गविशेषलक्षणमर्थमवबोधयति । न पदार्थमात्रम् । ( ४९२ । २३ ) अखिलमपि वाक्यं पदानां पदार्थेषु वाचकत्वशक्तिग्रहे जात एवान्वयविषयं गमयेत् । न तु तद्वाक्यं पदार्थेषु पदसमूहेऽज्ञातशक्तिके सति विशेषं गमयेदित्यन्वयव्यतिरेकाभ्यां वाक्यस्य वाक्यार्थावगतौ कर्तव्यायां शक्तिग्रहोंगमितिज्ञायतेऽतोऽस्मावर्थनीयः । ( ४९३ । ५ ) वाक्यं तावत्पदार्थसंसर्गविशेषलक्षणं वाक्यार्थमेव बोधयति न पदार्थमात्रम् । तच्चापेक्षते पदानां पदार्थेषु वाचकत्वशक्तिग्रहम् । शक्तिग्रहश्च पदार्थग्रहम् । पदार्थग्रहश्च प्रमाणान्तरायत्तो न तद्वाक्यजन्यः । इतरेतराश्रयादिदोषप्रसंगात् । यत्र चातीतानागतार्थसंसर्गो वाक्यार्थस्तत्रातीतानागतार्थग्रहणमावश्यकम् । ततश्चागमेनोक्तार्थं प्रतिपत्तिमभिलषितापि परेण अतीतानागतकालतत्संबन्धिपदार्थानां ग्रहणं एष्टव्यम् । न च तत्साक्षिणाविना भवतीति कथं

अतीतानागतार्थग्राहिणस्तस्य वर्तमानमात्रविषयत्वमिति । (४९४ । ३ ) उपाधिव्यभिचारयोरदर्शनेन सहचर्यदर्शनं व्याप्ति-निश्चायकमेवेति भावः । सार्वज्ञादि न ब्रह्मण्यारोपितं प्राग-न्यत्रानुपलब्धत्वात् । धर्माभावलिंगकमनुमानन्तु कथं भव-तामसिद्धत्वात् । मैवम् । धर्मराहित्यवादिनैवमनुमायो परंत-मित्यभिप्रायात् । ( पूर्वपूर्वारोपो उत्तरोत्तरारोपे प्रधानमिति चेन्न । अनवस्थाप्रसंगात् । ) सिद्धविषयत्वान्नेयमनवस्था-दूषणमिति चेन्न । धर्मप्रतीतेः आरोपितत्वस्य असिद्धत्वात् । अत एवाध्यस्तधर्मपरंपराकल्पनेन अनवस्था । ( ४८६ । ९ ) यदि साक्षिगृहीतमपि विश्वसत्यत्वग्राहिणोऽक्षजस्य प्रामाण्यं तात्कालिकमेव भवेत् तर्हि ऐक्यागमस्यापि प्रामाण्यं साक्षिगृ-हीतत्वाविशेषात्तात्कालिकं स्यादेवेति न विभागः सिध्यति । ननु ऐक्यागमस्यापि प्रामाण्यं तात्कालिकमेव । किंतु प्रत्यक्षमाभासीकृत्य निवर्तते । ऐक्यागमस्यापि प्रामाण्यं यदि तात्कालिकं स्वीक्रियेत तदा विश्वस्य सत्यतैव स्यात् । स्यादिदं यदि प्रामाण्यस्य तात्कालिकत्वंनामानित्यत्वमिह-विवक्षितं स्यात् । न चैवम् । क्षणमात्रवर्तिनोपि प्रामाण्यस्य विषयसत्यत्वाव्यभिचारित्वेनानित्यताया दौर्बल्यहेतुत्वासंभवात् । किंतु बाध्यत्वमेव । तच्च ऐक्यागमप्रामाण्यस्याभ्युपगतं तदा कथं विश्वस्य सत्यता न स्यादिति । नहि विरोधिनोः युगपन्निवृत्तिः । रजतशुक्तिज्ञानादौ अदर्शनात् । यदि ऐक्यागमप्रामाण्यं अबाध्यमित्यंगीक्रियते । अविशेषात् ।

किञ्च ऐक्यवाक्यस्य अबाध्यत्वे द्वैतभङ्गश्च । नहि वाक्यं वा तत्प्रामाण्यं वा तयोर्भेदाभावो वा ब्रह्मेति । आगम-प्रामाण्यस्य स्वतस्त्वे प्रत्यक्षप्रामाण्यमपि स्वत एवेति ब्रूमः । सम्यङ्मिथ्याज्ञानसाधारणकारणमात्रजन्यत्वं वा साधारणज्ञापकमात्रज्ञेयत्वं वा प्रामाण्यस्य स्वतस्त्वम् । स्वतस्त्वेपि अवान्तर-विशेषकल्पने नियामकाभावाच्च ।

( ४८७ । ६ ) किंच प्रत्यक्षं कालान्तरेपि बाधितप्रामाण्यं स्यात्तर्हि इदानीं तस्य मानतास्तीति कुतः स्यात् । कालत्रयसत्तानिषेधरूपत्वाद्बाधस्य न यदि च प्रत्यक्षप्रामाण्य-मिदानीं सत्स्यात् कथं कालान्तरेपि तर्हि बाध्येतेति व्याहतमेव तात्कालिकत्ववचनम् । अद्वितीयब्रह्मावस्थानलक्षणं मोक्ष-मभ्युपेत्य प्रत्यक्षप्रामाण्यदाबाध्यतावदागमप्रामाण्याबाध्यतायामपि तद्धानिः समानेत्युक्तम् । ( ४८७ । ११ ) विश्वमिथ्या-त्वप्रतिपादकमानमागमोनुमानं च मोक्षेपि मानमिति मोक्षसमयेप्यबाधितस्वरूपप्रामाण्यमित्यर्थः । नेति बाधितस्वरूपप्रामा-ण्यमित्यर्थः । आद्ये अबाधितस्वरूपप्रमाण्यपक्षे तेनैव सद्वितीयत्वादद्वैतहानिः स्यादित्युक्तलक्षणो मोक्षो न सिध्येत् । द्वितीयेऽपि अमोक्षता विवक्षितावस्थाया इति शेषः । विश्व-मिथ्यात्वमानं यदा नमा बाधितस्वरूपप्रामाण्यं स्यात् तदा विश्वस्य पुनरापत्तिः स्यात् । नास्तित्वप्रमाणबाधस्यास्तित्वा-व्यभिचारात् । विश्वसद्भावे च कथमुक्तलक्षणो मोक्षः स्यात् इति । आदौ तावत्प्रत्यक्षेण विश्वं प्राप्तम् । तदागमादिना

आपाततोऽनीतम् । आगमादेश्च बाधे पुनस्तदापतितमिति प्रतीत्यपेक्षया पुनः शब्दः । मुक्तिर्नाम अवस्थाविशेषः । तत्त्वात्मैवाज्ञानहानिरिति । अवस्थैवैषाऽत्मनोनत्वात्मैव । तथात्वे हि प्रागेव सिद्धत्वात् । प्रयत्नवैयर्थ्यम् । न चात्मा–ज्ञानसाध्यः अनादित्वात् ( ४८७।२२ ) अविद्याध्वंसविशिष्टो न प्राक् सिद्धो ज्ञानसाध्यश्चेति चेत्तर्हि स एव मुक्तिः । अद्वेति चेत् । तर्हि विशिष्टस्य सत्वाभावेन सती मुक्ति रित्ययुक्तं स्यात् । किं च मुक्तिर्नाम धर्मः । स कथं स्यादिति । न द्वितीयः । यदि मुक्तिरसती स्यात् तदात्मनोऽमुक्तत्वं स्यात् । मुक्तिरनिर्वचनीयेति चेत् तदपि अयुक्त एव । संसारेपि अनिर्वचनीये नैव हि द्वितीयेन सद्वितीयत्वं तदुत्तरमपि तच्चेत्स्यात्कथममुक्तत्वं न भवेत् । एतेन पञ्चमप्रकारतापि निरस्ता । अनिर्वचनीयताऽपरिहारात् । न हि चतुर्थप्रकारतावस्थितिरनिर्वचनीयतापत्तेः । अनिर्वच–नीयाविद्यानिवृत्तिः कथमनिर्वचनीया स्यादिति चेत् । घटप्रध्वंसे यथातथेति जानीथाः । ननु च मोक्षदशायां कालोऽस्तिर्न वेति विकल्प्यास्तिचेद्द्वैतापत्तिरिति दूषणं चास्तु । कालाधीना नियमेन कालाधिकरणा यद्वस्तुतत्कालसंबन्ध्येवेति व्याप्तेरिति हि शब्दार्थः । यदि मोक्षः कालसंबंधी स्यात् तदा शश-शृंगादिवदसन्स्यादिति । मुक्तिः अधिकरणेन कालेन व्याप्ता वस्तुत्वात् संमतवत् । कालनिवृत्त्यंगीकारे । तथाच आत्मनो मुक्तत्वं स्थितं मुक्तेः कालाधिकरणतानियमः श्रुतिसिद्धश्च ।

तदा विद्वान्पुण्यपापे विधूय दृष्ट्वैव तं मुच्यत इत्यादेः ।

(४८८।९) ननु च न मुमुक्षुः न वै मुक्तः इत्येषा परमार्थतेति मुक्तेरसत्त्वस्येष्टत्वात् नेयमनिष्टापत्तिरिति चेन्न ! मुक्तेः असत्वे संसारित्वापत्तेः। बन्धस्य मिथ्यात्वात् संसारो मुक्तिश्च न स्त एवेति चेन्न अनंगीकृतमेवानिष्टत्वम् । किंतु अप्रामाणिकत्वादिकमित्युक्तं प्राक् । तदेवमागामद्भितः प्रत्यक्षस्य दौर्बल्यं निराकुर्वता तन्मिषेण प्राबल्यं च व्युत्पादितम् ।

प्राबल्यमागमस्यैव जात्यानेषु त्रिषु स्मृतमित्यस्य वैदिकार्यविषयत्वादत्र च पृथिव्यादिप्रपंचस्य प्रस्तुतत्वान्न विरोधः। दृष्टश्च दहनशैत्यानुमानस्य मम कर्णे प्रविश्य गजो गर्जति इत्यादिवाक्यस्य च प्रत्यक्षबाधितत्वम् । तत्रापि प्रत्यक्षमुपजीव्यत्वाद्बाधकं न तु स्वभावेनेति चेत् । न। धर्मिव्यापक व्याप्यव्याप्तिग्राहकत्वाभावात् दहनौष्ण्यग्राहिणः प्रत्यक्षस्य अनौष्ण्यमुष्णताभावः । स च प्रतियोगिज्ञानाधीनज्ञानः प्रतियोगिभूतं चौष्ण्यं च तेजस्येव प्रत्यक्षेण प्रत्येतव्यमिति तस्य उपजीव्यत्वमिति चेन्न । उक्तोत्तरत्वात् । धर्म्यादिग्राहकस्यैवोपजीव्यत्वात् । अनुष्णतासाधने हि इदमुपपादनम् । केनचिद्धेतुनाशैत्यसाधनेत्वस्यनुवाकाशः । यदा च समस्तस्यापि तेजसो नौष्ण्यं साध्यते तदा भवत्विदं व्युत्पादनम् । अग्निमात्रपक्षीकारेपि नेदमुपयुज्यते । सौरादौ तेजस्युष्णतां स्पर्शनेनोपलब्धे अग्नावनौष्ण्यं साधनस्य तु स्वभावप्रबलेनैव

प्रत्यक्षेण बाध इत्येपादिक् । (४९९ । १) देहात्मत्वं प्रत्यक्षप्राप्तमेव न भवति । अतः प्रत्यक्षप्राप्तस्य अनुमानादिना बाध इत्यत्र नेदमुदाहरणम् । देहात्मत्वप्रतीतिरेव नास्ति कुतः तद्बाधः । येषाञ्चास्ति नास्तिकादीनां तेषामपि नेन्द्रियजा । किन्त्वनुमानागमाभासजन्यैवेति । सर्वस्यापि जन्तोर्ममदेह इत्येव हि प्रमाप्रतीतिर्नतु कस्यापि देहोहमिति । ननु प्रत्यक्षेण कृष्णोहमिति प्रतीतिः भवतीति चेन्न । कृष्णोहमिति च प्रतीतिर्नास्ति । कथं तर्हि व्यवहारः । कृष्णोहमिति व्यवहारस्तूपचार एव ।

(४९२ । १०) मीमांसकः शंकते । सकलमपि वस्तुविशेषात्मकम् । तत्र सामान्याकार एव शब्दवाच्यो विशेषस्तु लक्ष्य एवेति तावन्निष्टंकितम् । सामान्यं चातीतागतविशेष्वेकमेव । तच्च अर्थमानं चक्षुरादिनादृष्टं शब्दशक्तिविषयतया अवगतमेवान्यत्र कालान्तरेऽपि शब्दो बोधयति । अतीतादिकालेष्वपि कालत्वजातेरेव वाच्यत्वात् न तत्रापि शक्तिग्रहणाभावः । (४९३ । १४) नहि वैशेषिकादिवन्मीमांसकानां निःसामान्यं किमप्यस्ति । अतो न शक्तिग्रहायातीतादिग्रहापेक्षेति । अत्र वक्तव्यम् । स्वरूपशब्दो स्तुस्वरूपाण्यवगमयति । न वेति । नेति पक्षे अनुभवविरोधः । आद्ये कथं कया वृत्येति वाच्यम् । तावल्लक्षणा वाच्यार्थद्वारेणैव लक्षणालाभात् । सामान्यस्यैव वाच्यत्वात् । स्वरूपानां च सामान्यवर्जितत्वात् । अतः

स्वरूपशब्दौ वस्तुस्वरूपाणां वाचकः इत्येवांगीकार्यम् । अस्तु स्वरूपेऽपि स्वरूपत्वसामान्यमिति वदन् वादी प्रष्टव्यः । सर्वेषु द्रव्येषु स्वरूपत्वमेव व्यावृत्तधर्म इत्यंगीक्रियते वा न वा । आद्ये कथं तस्यानुगतत्वम् । व्यावृत्तमनुगतमिति व्याहतेः । द्वितीये । द्रव्येष्वत्यंतव्यावृत्तधर्माः अंत्यविशेषा इत्यंगीकारेऽनवस्थानात् । तत्र स्वरूपत्वमेव व्यावृत्तधर्म इत्यंगीकृतं तु तदनंगीकृत्य द्रव्येष्वपि व्यावृत्तधर्मः स्वरूपत्वमस्तु । किं विशेषैरिति विशेषानवज्ञानं मीमांसकेन कृतं न स्यात् । तथाच द्रव्येषु व्यावृत्तधर्मः क इति प्रश्नो निरुत्तरं स्यात् । ( ४९४ । २ ) गुणदयातुव्यावृत्तत्वेऽप्यनुगताकारतयांगीकृता अनुगतकल्पा एव । यदर्थं स्वस्वरूपमुदाहृते तत्र भेद एवोदाहरणं भविष्यति । तथाहि : भेदस्तावन्निसामान्योपि शब्दबोध्यो वचनवृत्त्यैवेत्यंगीकरणीयम् । न च वाचकः शब्दः शक्तिग्रहेण विनार्थं बोधयतीति तत्र तस्य शक्तिग्रहोप्येष्टव्यः । स च स्वरूपादेर्ज्ञानं विना न भवति । संबन्धज्ञानस्य संबन्धिज्ञानपूर्वकत्वनियमाच्च भवेदेवेति तद्ज्ञानमंगीकरणीयम् । ( ४९६ । ३ ) तथाच स इत्यंशस्य स्मृतित्वाच्च चाक्षुषादिप्रत्यक्षस्यातीतविषयत्वमित्यत आह । न चेति । । तत्वेदंत्वग्रहयोरेकत्वानुभवात् ग्रहग्रहणेनानुभवत्वं सूचयति । निरंशत्वानुभवाच्च । एतदुक्तं भवति । प्रत्यभिज्ञा न स्मृतिरेवेति परेणाप्युक्तम् । नापि ज्ञानद्वयरूपा । तत्तावत एवेदंतायां मानाभाव–

प्रसंगेन क्षणभंगभंगासिद्धेः । न च स्मृत्यनुभवरूपमेकमेव ज्ञानं । एकत्वे द्विरूपता विरोधात् । तस्मादनुभवरूपमेकमेवेदं विज्ञानं संस्कारसचिवेन चक्षुरादिना जातत्वात् सोयमि—त्याकारंच भवति । यथाखलु शुक्लहरित पितादिरूपणां चित्ररूपारंभकत्वं । यथा वा दोषसहकृतानामिंद्रियाणां विपर्ययहे—तुत्वं । तथा संस्कार सचिवानामिंद्रियाणां प्रत्यभिज्ञाहेतुत्वं भविष्यतीति को दोषः । अस्तितावदर्थज्ञानयोर्विषयविषयीभाव नियमः । न चासौ सत्तयाकारणत्वेनवा अतिव्याप्तेः । नापि तादात्म्यस्वरूपाभ्यां । असंभवात् । यत्र ज्ञाने योऽ-र्थोऽवभासते तत्रासौ विषय इत्यत्र सहस्व्यर्थानुपपत्तिः । तत्संबंधेन यस्यातिशय उत्पद्यते तस्यासौ विषय इत्यंगीकार्यं । तथाचार्थस्य विषयत्वसिद्धये ज्ञानजन्योर्थगतोतिशयः सर्वथां—गीकार्य इति कथं मानाभावः । मैवं तथासत्यतीतानाग—तयोः ज्ञानविषयताभावप्रसंगात् । तद्यसति धर्मिणि तत्र धर्मो—त्पत्तिः संभवति । अथ करणसंबन्धात्तत्र विषयत्वमित्युच्यते तर्हि वर्तमानेपि तथासंभवान्न ज्ञातता कल्पनीयेति । किंच ज्ञानं स्वविषये, ज्ञाततामुपजनयति यत्र कश्चिद्वा द्वितीये अतिप्रसंगः । ( ४९६ । १९ ) आद्ये ज्ञानतोपजननात्प्रा गेवार्थस्य विषयत्वसिद्धेः व्यर्थं तत्कल्पनम् । ज्ञाततायामपि ज्ञाततोत्पादोंगीक्रियते न वा । नेति पक्षे ज्ञानविषयत्वं न स्यात् । आद्येनुभवानारूढं ज्ञाततामप्रामहमंगीकुर्वाणस्य कल्प—नागौरवं स्यात् । अन्यथा तत्रैव व्यभिचारादिति ।

ननु ज्ञातो घटः प्रकटो घटः इत्यर्थविशेषणतया ज्ञातता प्रत्यक्षमीक्ष्यत इत्यतआह मयेति। ज्ञानमेव मयैतज्ज्ञानमिति ज्ञानगोचरं । क्रियाहि कर्तृस्थैव यदा कर्तृ प्राधान्येन व्यवन्हियते तदा कर्तृधर्मतया प्रतीयते । यदा देवदत्तो घटमिछति द्वेष्टिति । यदा तु कर्म प्राधान्येन तदा तद्धर्मतया । यथेष्टो द्विष्ट इति । यदा पुनः स्व प्राधान्येन तदा स्वतंत्रैव । यथेछा द्वेष इति । एवमात्म-गतमेव ज्ञानं विषयधर्मतयावभासत इति किमनुपपन्नं। ननु च ज्ञानं तावत् न प्रत्यक्षम् । तथाहि । न तावत्पूर्व-भाविनो ज्ञानस्य ज्ञानं विषयः । तथा सतिहि ज्ञास्या-मीत्येवस्यान्न तु जानामीति । नाप्यागामिनः । तथात्वे ह्यज्ञा-सिषमित्येवस्यात् । न च सहभाविज्ञानांतरमस्ति । ततो ज्ञानतालक्षणकार्येणैवानुमातव्यमिति कथं सा नाभ्युपगम्यत इत्यत उक्तम् । साक्षीगमिति ।

( ४९७ । ३ ) साक्षिणो नित्यत्वान्नोक्तदोषः । म न स्वप्रकाश इति । ननु प्रथमज्ञाने हि शुद्ध एवार्थो ज्ञायते न ज्ञातताविशिष्टः । तदानीं तस्य अजातत्वात् । तामुत्पाद्य पुनस्तद्विशिष्टमर्थं विषयीकरोतीति पक्षे विरम्य व्यापारप्रसं-गात् । न च प्रथमज्ञानविषयीकृतादधिकोर्थ उत्तरज्ञानेषु चकास्ति । ज्ञात इत्यत्र तु ज्ञानं विषय इत्युक्तमेवेति ।

ननु स्वाप्नपदार्थानां जाग्रत्वं यदि भ्रमसिद्धं बाधितंच तदा तेषां मिथ्यात्वमवर्जनीयम् । स्वप्नगजादयो मिथ्या-

भ्रमविषयत्वात् । बाधविषयत्वाच्च शुक्तिरजतवदित्यनुमानादिति चेत् किमिदं भ्रमविषयत्वं आरोप्यतया वा आरोपाधिष्ठानतया वा साधारणम् वा । तथा बाधविषयत्वमपि किं निषेध्यतयो तनिषेधाधिकरणतयाऽथसाधारणम् । उभयत्रापि द्वितीयतृतीयपयोर्दोषमाह । जाग्रद्वदिति ( शुक्तिकायां व्यभिचारात् ) । अनेन हेतुना तस्यापि मिथ्यात्वसाधने आत्मनि व्यभिचारः । तस्यापि क्षणिकोऽहं इत्याद्यारोपाधिष्ठानत्वात् । स्थिरोहमित्यादिबाधगोचरत्वाच्च । स्वरूपासिद्धिः । अद्राक्षमेवाहं गजमित्याद्यबाधितानुवृत्तेरुक्तद्विधा भ्रांतता बाध्यता च कुत इति भावः । किंचाभ्रांतत्ववादी प्रतिज्ञातार्थस्य नियमेन भ्रांतत्वमंगीकरोति । अन्यथा तत्र दृश्यत्वादेः अनेकांत्यात् । वयमपि तदभिमतस्य भ्रांतत्वमंगीकुर्मः । भ्रांतत्वांभ्रत्या चेत् स्यात् कथं नाभ्रांतिमत्यता । तदेतौ प्रयोगौ भवतः । ( ४९८ । ८ ) विश्वं अभ्रान्तं भ्रांतभ्रांतत्वात् । तथा विश्वमबाध्यं बाध्यबाध्यत्वात् आत्मवदिति । मायावादिना स्वमतस्यापि भ्रांतिविषयत्वेनांगीकृतत्वात् । ( ४९८ । १२ ) दुर्घटस्य भूषणत्वात् भूषणत्वेनांगीकाराच्च । मायया निर्मितं त्रातं चेति मायामात्रम् । माङ माने त्रेङ् पालन इत्यस्माद्धातोनुपसर्गे क इति कर्मणि क प्रत्ययः । आदेश उपदेश इतीति एकारस्याकारादेशः । अतो धातोरित्याकारलोपः ।

( ५०२ । ५ ) सर्वभावेन भारत । सर्वेण प्रकारेण इदमेकं विश्वमभिप्रत्यहमेकोनिःश्वाळस्मि नितरां स हत इति

निःष्पाट् द्वौ प्रपंचावभिप्रत्यहमेको निष्कलस्मि । त्रयोऽपि प्रपंचा मम किमेव कुर्मन्ति न किमपि मम निष्टं कर्तु-ईशते । किंत्वहमेव खल इव खलस्थितानि धान्यानीवभूरी-न्बहुवारं वा तान् निष्ठुरान् निंदकान् प्रति हन्मि तस्माद-नीश्वरास्ते इश्वरो मां किं निंदंतीत्यर्थः ऐतद्भगवतो वाक्यम् । संसारान्मुक्तिः समर्थपुरुषप्रसादसाध्या मुक्तित्वात् निगडमुक्तिवत् । विमतो भगवत्प्रसादः गुणोत्कर्षादिज्ञानसाध्यो महाप्रसादत्वात् । राज्ञःप्रसादवत् । अन्यस्य पक्षतुल्यत्वान्न व्यभिचारश्चोदनीयः ।

( ५०३ । १ ) जीवः ब्रह्माभिन्नो न भवति तदाभासत्वात् यः यदाभासो नासौ तदभिन्नः यथा सूर्यकादिः सूर्य दिने-त्यनुमानविरोधात् । न चासिद्धो हेतुः । यथैषा पुरु-षेछाया एतस्मिन्नेतदाततमिति विस्पष्टश्रुतिसिद्धत्वात् । यथा पुरुषेछयातता तथैतस्मिम् परमात्मन्येतज्जीवजातमाततमायत्तमिति यावत् । छाया यथा पुंसदृशीपुमधीना च दृश्यते । एव-मेवात्मकः सर्वे ब्रह्माद्याः परमात्मन इति श्रुतिः । साध्यसाधन धर्मसाम्यमेव दार्ष्टांतिकदृष्टांतेन्वेष्टव्यम् । नत्वतिसाम्यम् । तदधीनत्वे सति तत्सदृशत्वं प्रतिविम्बत्वं सादृश्यं चयित्वं तथाच ब्रह्माधीनत्वात् ब्रह्मसदृशत्वाच्चेति हेतुविवृतो भवति । ( ५०५ । १३ ) तथापि बिंबप्रतिबिंबयोरैक्यात्सूर्यकादिदृ-ष्टांतः साध्यसाधनविकल इति चेन्न । प्रमाणाभावात् । न तावत्प्रत्यक्षम् । तस्य प्रत्यक्त्वपराक्त्वादिना भेदग्राहित्वात् । प्रत्यभिज्ञानं त्वसिद्धमेव । नाप्यनुमानं लिंगाभावात् ।

अत्यंतमादृश्यस्य सव्येतरकरादिना व्यभिचारात् । वैधर्म्याभावस्य वा सिद्धत्वात् । क्रियासाम्यस्य छायादावनैकांत्यात् । पृथक्कारणाभावस्य नित्येषु व्यभिचारात् । बिंबकारणमात्रजन्यत्वस्य संदिग्धत्वात् । पृथक् दृष्टकार्यानुरोधेन ह्यदृष्टमपि पृथक्कारणं कल्प्यते । न तु कारणादर्शनेन दृष्टकार्यापलापः । तथासति बहुविप्लवापत्तेः । ततः कारणमुपाधिरेव कल्प्यते । आगमास्तु प्रत्यक्षविरोधादुपचरितार्था एव । यदि च जलादिना प्रतिहतानयनरश्मयो मुखमीक्षन्ते तदा तदा शिलादिप्रतिहता अपीक्षेरन् । न चास्यां प्रक्रियायां स्वच्छतयाः कोऽप्युपयोगोऽस्तीत्यलम् ।

तत अनुभ सते नित्यं तद्वदाभासतेऽपि च । भानमस्तित्वमपि चैवासमंताद्यतस्ततः । जीव आभास उद्दिष्टः सदैव परमात्मनः । तेन परमात्मना निमित्तेन आभासते प्रतीतो भवतीति प्रतीतौ तदधीनत्वमुच्यते । तद्वद्ब्रह्मवदाभासत इत्यनेन तत्सदृशत्वम् । भान् ज्ञानं । अस्तित्वं सत्वम् । भाच सा च भासे आ सर्वकालवर्तिन्यौ भासे आभासे परमात्माधीने आभासे यस्यासौ परमात्माभासः । (५०६ । ८) द्विविधो जीवोपाधिः आभ्यंतरो बाह्यश्च । तत्र स्वरूपप्रतिभासहेतुरभ्यंतरः । स्वभावविपरीतावभासहेतुरंतःकरणादिर्बाह्यः । तदायतत्वादिकं चैतन्यस्य नास्तीत्यभिप्रेत्य दमुदितम् । तदुक्तम् । जीवोपाधिद्विधा प्रोक्त इति । निरुपाधिप्रतिबिंबवादो युक्तिरपि च ह्यो राध्यधीनत्वाभावाभिप्रायेण नेतव्येति जीवब्रह्मणी नाभेदवती विरुद्धमर्थाधिकरणत्वात् । छायातपवत् । न चासिद्धो हेतुः । सर्वोपता च तद्दर्शनादिति । सर्वशक्तित्वेन

हेतुना ब्रह्मणोऽशेषदोषराहित्यस्य समर्थितत्वात् । जीवे दुःखा-दिदोषाणामनुभवसिद्धत्वात् ।

जीवे दुःखादिप्रतीतिः उपाध्यायत्तेति चेन्न । उपाधयः किं स्वशक्त्या परमात्मानं विछिद्य तदंशस्य दुःखादिदोषान् कुर्वन्ति ? नाद्यः । परमात्मनः सर्वशक्तिस्वातंत्र्यताविप्रसंगात् । न द्वितीयः । अप्रेक्षावत्प्रसक्तेः अविद्यादेरनादित्वान्न दोष इति चेत् । (५०७।८) अनादिनोपि तत्प्रवाहस्य तदधीनत्वात् । न च लीलामात्रं एत-दिति सांप्रतम् । अनर्थहेतोर्लीलायाः प्रेक्षापूर्वकारिभिरनुपादा-नात् । अतः परमपुरुषस्य न केनापि प्रकारेण दोषसंसर्गो युज्यत इति न दोषिणा जीवेन तस्यैक्यं युक्तमिति । ऐक्ये तावदनुसं-धानमेव प्रमाणम् । अनुसंधानं नाम भोगसमाख्यातः स्वीयतया दुःखादिसाक्षात्कारोऽभिमतः । जीवस्तावद्ब्रह्मस्वरूपं निर्दुःखत्वा-दिकं नानुसंधत्त इत्यविवादम् । ब्रह्मापि चेज्जीवगतं दुःखादिकं नानुसंदध्यात्तदा तयोरेकता नास्तीत्येकाकप्रयं स्यात् । ननु स्ति घटस्य घटेनैक्यं नत्वनुसंधानं तत्कथमेतदित्यत उक्तम् । चेतनेति । चैतन्यावच्छिन्नैक्यमनुसंधानैकप्रमाणकम् । आग-मादिकं त्वनुमानेमति संवादितया प्रवर्तते । ( ५०७ । १६ ) अतएवहि ममात्मा मद्रसेन इति वाक्यमनुसंधानाभावेन बाध्यते । तथा नायं स इत्यादिवाक्यमनुसंधानेन ।

नन्वस्ति घटस्य घटेनैक्यं नत्वनुसंधानं तत्कथमेतत् । उच्यते । चैतन्यावच्छिन्नमैक्यमनुसंधानैकप्रमाणकम् ।

न च प्राग्भवीयदुःखानुसंधानं इदानीं नास्ति अस्तिचैक्य-मिति व्यभिचारः शंकनीयः । नहि वयं सदानुसंधानं ब्रूमः । किंतु यश्चेतनो यत्स्वरूपं कदाचिदनुसंधत्ते स तेनाभिन्नः यो नानुसंधत्ते स तेन नाभिन्न इति । तदेकप्रमाणकस्य तन्निवृत्तौ निवृत्तिरेव । (५०७।११) यथा रूपग्रहणनिवृत्तौ च रूपनिवृत्तिः । न च चेतनत्वं शक्यनिवर्तनम् । उभयवादिसिद्ध-त्वात् । तस्मादेकत्वेव निवर्तत इति । एतेन चेतनत्वाद्यनुमानस्य सोपाधिकत्वं चोक्तं भवति । अनुसंधानं खलु चेतनत्वावच्छिन्न-स्यैक्यस्य व्यापकमुपलब्धं देवदत्तादौ अव्यापकं च चेतनत्वादेः । पक्ष एव तदभावात् । तथाच सुलभप्रयोगः । जीव ब्रह्मणी चेतनत्वे सति परस्परैक्यवती न भवतः परस्परस्वरूपानुसंधानर-हितत्वात् संप्रतिपन्नवदिति । न च प्रतिज्ञायां विशेषणं व्यर्थम् । शब्दो न स्पर्शवद्विशेषगुण इत्यादाविव हेतुव्यभिचारपरिहारार्थ-त्वात् ।

(५०८।१२) न जीवानां ब्रह्मणैक्यं सर्वज्ञेनापीश्वरेण नानुसंधीयमानत्वात् । अविद्यैक्यवत् । न चासावनुसंधत्ते । यस्मात्क्षरमतीतोहमित्यादितद्वाक्यैः भेदानुभवस्यैवागमात् । अतः सर्वज्ञेनानुभूयमानमैक्यमस्तीति । विभेदजनकेऽज्ञाने नाशमात्यं-तिकं गते । आत्मनो ब्रह्मणो भेदमसतं कः करिष्यतीत्यस्यार्थः । भेदशब्दो विरोधवाची । मित्रभेद इति यथा । तथाच जीवस्य परमात्मना विपरीतमतित्वरूपज्ञाननिबंधनम् । तदपायेन भवती-त्यर्थः । ऐक्यं संसारावस्थायां अस्ति वा न वा । आद्ये तान्यहं

वेद सर्वाणि नतत्त्ववेत्यपरंतपेत्यादिवाक्यविरोधः । द्वितीये मतं ईश्वरस्य स्यात् । विद्यमानस्याप्यननुसंधानत्वात् । द्वितीयेनकदाप्यैक्यंस्यात् । पूर्वभिन्नयोः पश्चादैक्यस्य दर्शनात् । यावन्मोक्षंतु भेदस्याजीवस्य परमस्य च ततः परं न भेदोस्ति भेदहेतोरभावत इत्यादि श्रुतिस्मृतीनांनैक्यादि विषयत्वेन सावकाशत्व त् । जीवेश्वरौ (५१० । ३) न चेतनत्वेमत्यंशांशिनौ । परस्परानुसंधाशक्त्य—त्वात् । यथा देवदत्त यज्ञदत्तौ व्यतिरेकेण इंद्रार्जुनाविति । अंशी अंशगतं सर्वमप्यनुसंधत्ते । अंशिस्तु अंशिगतदुःखादिकमेव न तु सर्वं । सर्वदोषाधिकाधिकः (५११ २१) सर्वदोषेभ्यधिकाधिको त्वंताधिकः । अत्र ईशइति स्ववचनविरोधः जगन्मिथ्येति स्वन्यायविरोधः । भिन्नानहीतिस्वक्रियाविरोधः । परानपेक्षतया प्रतीयमानं स्वरूपं धर्मोश स्वभाव इत्युच्यते । पक्ष परिग्रहरूपा प्रतिज्ञा । ईश्वरेण सविषयाभिन्ना गुणाः विशेषोऽपि सर्वविशेषा-भिन्नः न चानवस्था । यतो विशेषी विशेषश्च स्वयमेव । स्वनि-र्वाहकत्वात् । विशेषस्य ज्ञानादेर्ब्रह्मधर्मस्य यदि ब्रह्मणो भेदोंगी क्रियते तदा पृच्छामः । स भेदोभेदिभ्यां भिन्नोऽभिन्नो वा । आद्ये सोपि भेद तथेन्यनवस्थानात् । विशेषणविशेष्यभावादि प्रतिपत्तये खलु धर्मधर्मिणोर्भेदोभ्युपगम्यते । स च प्रतीयमान एव तद्धेतुः । तत्प्रतीतिश्च विशेषणादिभाविर्नैवेत्युत्तरोत्तरभेदप्रतीतिः अवश्यमपेक्षितैवेति स्यादनवस्था । ( ५१५ । ८ ) अभिन्नत्वेपि वक्तव्यम् । सविशेषाभिन्न उत निर्विशेषाभिन्न इति । आद्ये भेद इव विनापि भेदेन विशेषेणोपपत्तावपि वृथा परंपरा कल्पनागौरव

रयात्ततो धर्माणामेव सविशेषाभेदांगीकारोपपत्तेः । न द्वितीयः । तथात्वे तयोर्भेद इति भेदव्यवहारानुपपत्तेः । भेदस्य भेदिमात्रत्वेच धर्म्यादिपरिलोपो वा । आद्ये न भेदः सिध्येत् । तथाच न धर्मधर्मिव्यवहारश्च स्यात् । द्वितीये धर्म्यादिलोपः । ततश्च निराश्रयत्वेन भेदस्यापि लोपः । किंच यदि भेदो घटस्य स्वरूपं तर्हि भिन्नोयं घट इति भेदस्य विशेषणताप्रतीतिर्न स्यात् । तथायं पदार्थो घटाद्भिन्नः कुड्याद्भिन्नः पटाद्भिन्न इति भेदप्रतियोगिकभेदात् बहुधा दृश्यते पदार्थस्त्वेकमेव । तथायं पदार्थो नेत्रवक्रत्वेनाननेन कोटरत्वेन पुरुषाद्भिन्न इति व्यावर्तमधर्मेण भेदो दृश्यते । पदार्थस्त्वक्षसन्निकर्षमात्रेण । भेद एव प्रतियोगि साक्षित्वेन दृश्यते घटस्त्वेकधैव । अतो न भेदो घटस्य स्वरूप मिति यत्स्वरूपभेदस्य दूषणं परैरुच्यते । तत् तस्य किमुत्तरं त्वयाभिधास्यते । (५१५ । २०) यदि विशेषोनंगीक्रियते तदा भेदो भेदिनाऽभिन्न इत्यपि नांगीकर्तुं शक्यते । भेदभेदिनोर्भेदसाधकानां अनेकेषां भावात् । विशेषेणैव हि तेषामन्यथासिद्धिं व्युत्पाद्य प्रतीतिबलेन भेदस्य भेदिनाऽभेदो वक्तव्यो नान्यथेति भावः । तदीयत्वेन विशेषणत्वेन सप्रतियोगित्वेन लिंगित्वेन बहुत्वेन च प्रतीयमानोन्योन्याभावादिरूपो भेदो न भेदिस्वरूपतयांगीक्रियते । न चाद्वैतवादिनः स्वरूपान्नांगीक्रियते तत्किमनेन भेदेन । (अनु–मूल) अभेदभेदयोश्चैव स्वरूपत्वं हि भेदिनः । तयोरप्यविशेषत्वे पर्यायत्वं हि शब्दयोः । यो भेदस्य (५१६ । १) भेदिना भेदमंगीकरोति । तेनाभेदस्यापि घट-

स्वरूपमेवांगीकरणीयम् । ततश्चैकेन घटेनात्यंताभिन्नयोरभेद-भेदयोः अभेदोंगीकरणीयः । तयोरत्यंताभेदे विशेषेचासत्य-भेदाभेदशब्दयोः पर्यायत्वं स्यात् । एकार्थवाचित्वात्घटकलश-शब्दवदिति हि शब्दार्थः । विशेषानंगीकारादभेदभेदिशब्दयोरपि पर्यायत्वं स्यात् । यद्यपि भेदाभेदयोर्भेदिना घटेन सहाभेदस्तथापि तयोरन्योन्यं भेदोस्तीति न तच्छब्दयोः पर्यायत्वं प्रसज्यते । तत्किं विशेषेणेति । मैवम् । विशेषानंगीकारे धर्मिणा भिन्नयोः भेदाभेदयोः कथं मितो भेदः संभवति । तयोर्भेदिमात्रत्वात् । अन्यथा घटस्यापि स्वतो भेदः स्यात् । घटेनाभिन्नयोर्भेदाभेदयोः परस्परं भेदकार्यनिर्वाहार्थं घटेन सविशेषएवाभेदोंगीकार्यः । भेदाभेदयोर्द्धर्मिणः सविशेषाभेदः मिथो भेदएवेत्यंगीकारे कल्पनागौरवं स्यात् । एवं धर्मधर्मिणोः भेदमंगीकृत्य तस्य धर्मिणा सविशेषाभेदांगीकारे कल्पनागौरवम् । प्रथमत एव तथांगीकर्तुं शक्यत्वात् । अभेदवादिनापि विशेषोंगीकर्तव्यः क्रियादिविषयवाक्यानां अतत्त्वावेदकत्वमंगीकुर्वतापि मायिना सत्यं ज्ञानमनंतं ब्रह्मेत्यादीनि तावत्तत्त्वं विषयाणि परेणांगीकृतान्येव । तेषां चाखंडार्थनिष्टत्वे सत्यज्ञानादिपदानामेकार्थत्वेन पर्यायत्वं स्यात् । न च तद्युक्तम् । सहप्रयोगदर्शनात् । न च भेदोंगीकर्तुं शक्यः । एकएवाद्वितीयं इत्यादिश्रुतिविरोधात् । अतः सत्येपि विशेषोंगीकार्यः । यदि सत्यादिपदानां विधिवाचित्वे विधायमा-नानां सत्यत्वादिविशेषणानां ब्रह्मण्यभावात् । स्वरूपमात्रस्य चैकयत्वात्पर्यायत्वं स्यात् । न चैवं असत्यत्वाद्यपोहवाचित्वात् ।

न चैवं सति वैयर्थ्यम् । ब्रह्मण्यसत्यत्वादीनां विशेषणानां भ्रांतिकल्पितत्वेन तन्निवारणार्थत्वात् । संतिहि नास्ति ब्रह्मसदपि न ज्ञानं परिछिन्नंचेत्यादि प्रतीतयः प्राणिनां । न च सत्यपदमज्ञानस्याप्यपोहं वक्ति । येनैकनैवालमिति स्यात् । तस्मान्नपर्यायत्वं वैयर्थ्यं चेति । यद्वा सत्यानि पदानि ( ५१७ १३ )सत्यत्वादि—पृथगर्थवाचिन्येवेति न पर्यायतामापद्यन्ते । ब्रह्मणि तु सलक्षणया प्रवर्तंत इति न तत्र विशेषणानि समर्पयन्ति । नहि गंगापदंतीरे गंगात्वमर्पयति । न चैवमेकेनैव लक्षितत्वादितरेषां वैयर्थ्यमिति वाच्यम् । आरोपितानामसत्यत्वादि विशेषणानां प्रत्येकं निवारणेन सार्थकत्वात् । न च संगतिग्रहणविषयाभावाल्लक्षणानुपपत्तिः । ऽचके गृहीतसंगतिकानां सत्यब्रह्मलक्षणकत्वोपपत्तेः । अतो न पर्यायत्वं नापि वैयर्थ्यमिति पूर्वपक्षः । एवमपि न सत्यस्याखंडता सिद्धिः । कल्पितासत्यत्वादि विशेषणराहित्यलक्षणविशेषणविशे–षितायाअवर्जनीछत्वात् । यद्यारोपितविशेषराहित्यरूपविशेषण-विशेषितासत्या स्यात् । तर्हि वाक्यार्थस्यानवस्थितिः स्यात् । सत्यत्वादिविशेषवत्तया असत्यत्वादिव्यावृत्तिरूपविशेषणविशिष्ट–ताया अपरिहारादखंडत्वहानिरेव । सापि तथाचेदनवस्थितिब्रह्म–ज्ञानस्यावस्थैव । किंच ब्रह्मणो निर्विशेषत्वे सत्यादिपदानां तत्र प्रवृत्तिर्न स्यात् । गुणकर्मादिशब्दप्रवृत्तिनिमित्ताभावात् । लक्षणया प्रवृत्तिरिति चेत् । तथापि लक्ष्यत्वविशेषो न परिहार्यः । मुख्यार्थसंबंधित्वमपि विशेषणमेव । यदि लक्ष्यमित्यपि लक्षण–यैवोच्यते । तथापि लक्ष्यत्वविशेषमपरिहार्य पुनर्लक्ष्यपदप्रयोगात् ।

तेनापि लक्ष्यं चेदनवस्था । ब्रह्मण्यभावधर्माः संति चेत् । तर्हि तदेव निमित्तीकृत्य पदप्रवृत्त्युपपत्तेः । (५१८ । ८) न च लक्षणावकाशः असत्या आवृतत्वादि ब्रह्मणि सत्यपदप्रवृत्तिरित्यादि लक्ष्यपदस्याप्यपोहवाचित्वोपपत्तेः । स एव लक्ष्यशब्दप्रवृत्ति-निमित्तम् । किंच यथाहि सत्यज्ञानादिपदानि ब्रह्मणि श्रूयन्ते एवमेव सर्वज्ञ एष सर्वेश्वर इति सर्वज्ञादिपदान्यपि । तथाच यथा सत्यत्वाद्यभाववाचीन्येवमेतान्यप्यसर्वज्ञत्वाद्यभाववाचितया त्वयां-गीकर्तव्यान्येव । ततश्च सत्यज्ञानादिवाक्यं तत्त्वावेदकं सर्वज्ञादि वाक्यं मायाशबलपरमितिविभागो न युक्तः । माभूदयं विभागः असार्वज्ञ्यभावेपि ब्रह्मण्यंगीक्रियत एवेति चेन्न तथांगीकारे सार्व-ज्ञादिभावधर्मादुर्निवारादेव । द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति न्यायात् । (५१८ । १७) यदि सर्वज्ञादिपदं ब्रह्मणि श्रूयमाणं असार्वज्ञादिनिवृत्तिं बाधयतीत्येतादृशं प्रमेयं यदि न ग्राह्यं तदाऽनंदपदमप्यसुखत्वं न निवर्तयेत् । तथाच ब्रह्मणि प्रसक्तमसत्यादिकं यथार्थं स्यात् । ननु सत्यादि पदानितावदा-पाततः सत्यत्वादिविशेषणानि समर्पयंति । तदनंतरं तद्विरो-ध्याकारनिवर्तकत्वेन पर्यवस्यंति । यथोक्तम् । प्रतिपाद्यपदार्थेहि विरोधात्तद्विरोधिनः । पश्चादभावं जानाति वध्यघातकवत्सदादिति । सत्यत्वादिविशेषणानां चानृतत्वादिविरोधित्वं सुप्रसिद्धमिति कथं न तद्व्यावृत्तिरिति । समं मेतत्प्रकृतेऽपि । सर्वेश्वरादिपदसमर्पि-तस्यैश्वर्यादेरिति शेषः । विरोधित्वं सिद्धमेव । (५१९ । २) धर्मधर्मिणोर्भेदाभेदाविति वदता तौ किं ताभ्यां अत्यंतभिन्नावां-

गीक्रियते उतात्यंताभिन्नाऽथभिन्नाभिन्नौ । नाद्यः । भेदानव- स्थापत्तेः । भेदस्य स्वरूपत्वे च विशेषानंगीकारे तदीयत्वाद्यनु- पपत्तेः । भेदाभेदयोरत्यंताभिन्नयोः संबंधाभावेन तदीयत्वानुप- पत्तेश्च । न द्वितीयः । तदीयत्वाद्यनुपपत्तेरेव । भेदाभेदशब्दयोः पर्यायत्वापत्तेश्च । न तृतीयः । अनवस्थापत्तेः । कचिद्भेदाभेदयोः अभेदे पूर्वदोषानुषंगात् । तस्माद्भेदाभेदवादिनापि कचिद्विशेषां- गीकार्य इति । तदेवमुभयव्यपदेशान्यथानुपपत्या भगवद्धर्माणां सविशेषात्यंताभेद एवेति सिद्धम् । अस्मत्पक्षे संहितेर्भेदाभेदः सोपि स्वरूपाभिन्नः न चोक्तदोषप्रसंगः । विशेषांगीकारात् । न च विशेषेणैव भेदव्यवहारनिर्वाहोपपत्तेः । भेदाभेदांगीकारो व्यर्थ इति वाच्यम् । प्रतीत्यनुसारेण तदंगीकारात् । अपर्यवसा- नपरिहारार्थं सविशेषाभेदस्वीकाराच्च । ( ५१९ । ७ ) अहेर- वयवानामन्योन्यसंयोगविशेषोह्यहि कुंडलमित्युच्यते । स तावदहि नानात्यंताभिन्नः । प्रकाशश्च द्रव्यांतरं न स सूर्यादिभिन्न इत्यतः प्रकाशाश्रयवद्वेतिदर्शनमपि नात्यंताभेदोपयुक्तम् । कालस्य पूर्वत्वं नाम प्रध्वस्तक्रियासंबंध इति न पूर्ववद्वेत्यपि प्रकृताननुगुणं इति पराभिप्रायः । तत्राहि कुंडलं यद्यपि भेदाभेदवत्तथापि मंदानाम- भेदे बुद्धिमवतारयितुमुपात्तम् । यथा पृथव्यामोषधयः संभवतीति यथा । प्रकाशशब्देन च भास्कररूपं विवक्षितम् । तच्च याव- द्द्रव्यभावित्वात्सूर्यमंडलेनात्यंताभिन्नमेव । पूर्वत्वं च पूर्वकालसं- बंध इति सकललोकसिद्धमिति । सत्यत्वादिधर्माणां ब्रह्मणाभिन्न- त्वात् । ब्रह्मवाचकत्वस्य ब्रह्मपदस्य च सामान्यतः सत्यत्वादि-

वाचकत्वमंगीकार्यमेव । गुणानां ब्रह्मणाभेदे कथंतदन्वयस्त—द्बोधोवा संभवतीति चेन्न । सविशेषाभेदस्यांगीकारात् । सत्यादि-पदान्यपि विशेषतः सत्यत्वाद्यन्वितमभिदधति । प्रत्येकं पदानि सामान्यतोन्विताभिधायीनि । विशेषतोन्वितार्थप्रतीतिस्तु परस्पर-सन्निधानाहितशक्तिभिः पदैर्भवतीत्येतदन्वयनुभवसिद्धमित्यर्थः । धर्माणां धर्मिणां भेदेन तावद्विशेषाभिधानं प्राप्तं न च तदस्त्यनु-भवविरोधात् । अतस्तत्प्रतिबन्धकत्वेन विशेषः कल्पनीयः । सच यथानुभवमेव स्वीकार्य इति नातिप्रसंगः कश्चिदिति । एकस्यसिद्धावनुषंगीयोर्थः सिध्यति सोधिकरणसिद्धांतः । यद्यन्वितमेवैतत्पदं स्वार्थं वदेदिह [अनु.] । तथाऽन्यान्यपि सर्वाणिकः कुर्यादन्वयंपुनः । (५२० । २०) आद्यं पदमलब्ध सहायं प्रथमं सामन्यतोन्वितमभिधत्ते । उत्तराणित्वादित एव लब्धसहायानि विशेषत एवान्विताभिधायीनि । अन्वयबोधकानि तावद्वक्तव्यानि किंपदानि वक्ता वा पदैरभिहिताः पदार्था वा वाक्यं वा आहोस्विद्वाक्यांत्यवर्णो वा उत वर्णमाला वा स्फोटो वा श्रोतावेति । एतेषामन्वयज्ञानात्पूर्वभावित्वेन च वादिभिरंगी-कृतत्वेन वा प्रसक्तेः । नाद्यः । पादानां स्वार्थमात्रप्रकाशकत्वा-भ्युपगमात् । अन्वयस्य च पदाभिधेयत्वात् । न द्वितीयः । (५२१ । २) सकृदुच्चारण एव तस्योपक्षीणत्वात् । न तृतीयः । अन्वयस्य शाब्दत्वाभावप्रसंगात् । शब्दस्य स्वार्थमात्रप्रतिपादक-त्वात् । यदि पदार्थ एवाकांक्षादिमंतोन्वयं बोधयंतीत्यंगीक्रियते तर्हि पदार्थाख्यं प्रमाणांतरं चापद्येतितपदैरभिहितानामेव पदार्था-

नामन्वय बोधकत्वात् । अन्वयस्य न शब्दत्व प्रसंग इति चेन्न। तथासति प्रत्यक्षावगतधूमप्रतिादितस्याग्नेः प्रत्यक्षप्रमेयत्व प्रसंगात् । अस्तु तर्हि वाक्यस्यान्वयबोधकत्वमिति पक्षः । पदानां अन्विताभिधानसामर्थ्यानंगीकुर्वता वाक्यस्यान्वयबोधकत्वं अंगीकर्तुमशक्यं आकांक्षा सन्निधियोग्यतावतां पदानां समूहोहि वाक्यम् नतु पदव्यतिरिक्तं । तथाच जिज्ञासितार्थानभिदधति जिज्ञासां निवर्तयंति पदानि निराकांक्षाणीत्युक्तं भवति । निराकांक्षापदन्येव वाक्यं सन्निधियोग्यतोऽन्यथानुपपत्त्यासिद्धेः । न पंचमः । एकस्य वर्णस्यान्वयबोधकत्वानुपपत्तेः । तथात्वे वा आदिवर्णएवान्वयस्य बोधक इत्यपि वक्तुं शक्यत्वात् । न च वक्तव्यं आदिवर्णश्रवणेप्यन्वयो न प्रतीयत इति अंत्यवर्णश्रवणोपि तथात्वात् । पूर्ववर्णश्रवणसहकृत अंत्यवर्णो बोधकः न स्वयमेवेति चेत् । न उत्तरवर्णसहकृतएवादिवर्णोन्वयबोधको न स्वयमिति समम् । किंच श्रोतुराकांक्षितार्थाभिधानेन जिज्ञासानिवर्तकान्येव पदानि वाक्यमित्युच्यते । तथाच तेषामेवान्वयबोधकत्वोपपत्तौ अंत्यवर्णस्य तत्कल्पनेति प्रसंगात् । किंच अंत्यवर्णः कया वृत्यान्वयं बोधयति न तावदभिदावृत्त्या एकस्य वर्णस्यानेकसंबन्धपन्वयबोधकत्वायोगात् । नापि लक्षणया तत्सामग्र्यानुपपत्तेः। न च गौणीगुणवृत्तिर्निमित्तादर्शनात् । अतः पक्षोयमतीव मन्दः न षष्ठः । कचटतपादिवर्णमालाया अप्यन्वयबोधकत्वापत्तेः । न च तत्र कश्चिद्विशेषः कल्पनीयः । तत्प्रमाणाभावात् । न च स्फोटोप्यन्वयबोधकः । स्फोटे प्रमाणाभावात् । अन्वयप्रतीत्य-

न्यथानुपपत्तिः प्रमाणमिति चेन्न पदानामेव संसृष्टार्थप्रतिपादकत्व- संभवात् । न च तदतिरिक्तोऽन्वयनामास्तिप्रतिपादनीयो यदर्थं स्फोटान्वेषणमिति । पदवादिनः कल्पनालाघवं प्रमितानां पदानां अन्विताभिधानस्य कल्पनात् । स्फोटवादिनस्तु गौरवं यतो निष्प्रमाणकः स्फोटस्तस्यान्वयप्रतिपादकत्वं चेति द्वयं कल्पनीय- मिति । ( ५२२ । ३ ) यदि हि पदानि पदार्थान्प्रतिपाद्यैव निवर्तन्ते पदार्थ एवान्वयं बोधयतीति मतं तदा स्यादेवोक्तदोषः । अचेतनानामपि पदानां यदि पुनर्व्यापारो विरम्य व्यापारोऽङ्गी- क्रियते तदा पृच्छामोऽनुक्तानामपि पदानां पदार्थादिप्रतिपादने व्यापारः कुतो न भवतीति । नह्यचेतनानां विमृश्य व्यापारो युज्यते । ( ५२२ । १५ ) अतोऽन्वयोऽप्यस्माभिः बोधनीय इति विमृश्य विरम्य श्रोतान्वयज्ञाने कारणमिति तु व्यापारो युज्यते । किंतु कथंचन तस्य करणं तु विचार्यते । अनन्विताभिधायीनि पदान्येवावधारणीकृत्य श्रोतानस्मादितानामर्थानामन्वयज्ञानाय यतन इति चेत्तत्राह । पुमानेवेति । अन्वयाभिधायिभिरपि पदैर्यद्यन्वयं प्रतिपाद्यते । तदा गवादिपदैरश्वादिकमपिप्रतिपद्येत । तत्र वाचकत्वशक्त्यभावात् । न तत्प्रतिपत्तिरिति चेन्न । समं प्रकृतेपि । अन्वये शक्तिरहितैः पदैः कथमन्वयज्ञानाय यतेत । देवदत्तेनेति कर्तृवाचिनि शब्दे प्रयुक्ते श्रोता किमिति पृच्छति । स च पच- नादिधर्मविशेषज्ञानमनिच्छन्नेव पृच्छति । विशेषजिज्ञासया च धर्मसामान्यज्ञानादेव । न च तदा तस्य धर्मसामान्यज्ञानोपायो- स्त्यन्यः पदात् । अतः पदेन धर्मसामान्यान्वितं वस्तुप्रतिपादितमिति

ज्ञायते । कर्तादिपदश्रवणांतरभावी किमित्यादिप्रश्नो जिज्ञासा-मूलः । प्रश्नत्वात् संमतवत् । ( ५२३ । १ ) सा च जिज्ञासा-धर्मविशेषविषया तदुक्त्या निवर्तमानत्वात् संप्रतिपन्नवदिति । विशेषजिज्ञासा च धर्मसामान्यज्ञानपूर्विका विशेषजिज्ञासात्वात् संमतवत् । सामान्यज्ञानं चेदमेतत्पदजन्यं तदनंतरभावित्वात् । संमतवदिति । पदेन पदार्थमात्रेभितेऽविनाभावबलेन धर्मसामा-न्यज्ञानमिति चेन्न । दृष्टपदपरित्यागे नादृष्टानुमानकल्पनानुपपत्ते-रिति । एतेन विशेषान्वितपक्षोपि परास्तः । सर्वेपि शब्दाः सामान्येनान्विता स्वार्थवाचका इत्येष एव पक्षो ग्राह्यः इत्यर्थः । ( ३ । २ । १५ ) द्वितीयः पादः ॥

मोक्षसाधनं च भगवत्प्रसाद एव तत्साधनानि च विषय-वैराग्यं भगवद्भक्तिस्तदुपासना तत्साक्षात्कार इति चत्वारि । तानि च न समकक्ष्याणि । (५२६ । १५) आनंतर्यलक्षणासंगतिरत्र परेषां साधनक्रमः नित्यानित्यवस्तुविवेकः शमदमादिसंपत्तिः इहामुत्रफलोपभोगवैराग्यं मुमुक्षुता चेति । साधनचतुष्टयं पूर्ववृत्त-मुक्तं तदसदुक्तएवांतर्भवतीत्यविरुद्धम् । उत्तमभक्तानां मुमुक्षुता नास्तीत्याचार्येण न संकीर्तिता । एतेन जिज्ञासासाध्यस्य वैराग्या देस्तत्साधनत्वे अन्योन्याश्रयत्वं स्यादित्यपि न । सात्विकप्रकृतेः सत्संगवशादीषद्वैराग्यादिमतःश्रवणेन तदभिवृद्धौकृतमननादेर्भूय-स्तदभिवृद्धिरिति । ( अत्र सूत्राणां संमतिरुच्यते ) अन्ये पुनर्म-न्यन्ते ।

( ५३९ । १ ) श्रवणमेव ब्रह्मापरोक्षसाधनम् । मनन-

निदिध्यासने तु श्रवणं प्रतिफलोपकार्यंगभूते । असंभावना विपरीत भावनाख्यचित्तविक्षेपप्रतिबद्धं हि ब्रह्मापरोक्षज्ञानं नाविर्भवति निर्मूल-स्थे । मननादिकं च प्रतिबंधं निवर्तयतीति । तदसत् । शब्दस्य साक्षात्कारकारणतायाः क्वान्यदर्शनात् । ब्रह्मविषयशब्दवद्धर्मादि-विषयशब्दस्यापि तथात्वापत्तेश्च । प्रत्यक्षलक्षणक्रांततया शब्दस्य तत्रांतर्भावश्चापद्येत । अथ मतम् । दृश्यते तावद्दशमस्त्वमसीति वाक्यस्य साक्षात्कारकरणत्वम् । न च तत्रापीन्द्रियमेव करणं न शब्दस्तु सहकारीति चेन्न । वैपरीत्यस्यापि सुवचत्वात् । ( ५३९ । ७ ) तथापि कुतो विनिगमनमिति चेत् । क्वचिद्बहु-लतमे तमसि कश्चिच्च लोचनविरहिणोपि वाक्याद्दशमोस्मीत्यपरो-क्षप्रतीतिदर्शनादिवदामः । धर्मादिविषयस्यापि शब्दस्यापरोक्ष-ज्ञानसाधनत्वापादनं चासत् । वैषम्यात् । प्रकृतो हि शब्दो अपरोक्षब्रह्मात्मविषयः । न तथान्यः । अस्ति चास्यापरोक्षज्ञान साधनत्वे प्रमाणम् । नान्यस्य । तथाहि । विमतं शाब्दज्ञानं अपरोक्षम् । अपरोक्षविषयत्वात् । सुखादिज्ञानवत् । अपरोक्षत्वं वेदांतवाक्यजन्यज्ञानवृत्ति । अपरोक्षज्ञाननिष्ठात्यंताभावाप्रतियोगि-त्वात् । ज्ञानत्ववदिति । न च विवादध्यासितः शब्दोऽपरोक्ष-ज्ञानजनको न भवति । शब्दत्वात् । ज्योतिष्टोमादिवाक्यवदिति युक्तम् । दशमस्त्वमसीत्यादौ व्यभिचारात् । श्रूयते च तद्वास्य विजिज्ञौ तमसः पारं दर्शयतीत्युपदेशमात्रादेवापरोक्षप्रमितिजन्मः अत एव ब्रह्मात्मविषयवाक्यजन्यत्वेन प्रत्यक्षलक्षणं विशेषणीय-मिति । अत्रोच्यते । यत्तावदुक्तं दशमस्त्वमसीत्यादिवाक्यात्

अपरोक्षज्ञानजन्योपलब्धमिति । तदसंगतम् । दशत्वसंख्याखल्व-पेक्षाबुद्धिजन्या तद्व्यंग्यत्वादित्यतो नापाततो रूपादिकमेव प्रत्यक्षेणोपलभ्यते । ततो दशानां पूरणो दशमोपि तथा । अतः प्रथमं शब्देन परोक्षज्ञाने जातेऽनंतरं लब्धसहायेन प्रत्यक्षेणापरोक्ष ज्ञानं जायते । आशुभावादेकमेवापरोक्षं ज्ञानमित्यभिमानः । अंधकारादौतु वाक्यादुत्पन्नस्य ज्ञानस्यापरोक्षत्वं नास्त्येव । प्रतीत कलहोयं निरवधिक इति चेत् । अत्रेदं वक्तव्यम् । (५३९।१७) शब्दस्यापरोक्षज्ञानसाधनस्याप्यागंतुकम् । आद्ये सर्वेषामपि शब्दानां तथाभावः स्यात् । द्वितीये निमित्तं वाच्यम् । ब्रह्मात्म विषयत्वमिति चेत्तर्हि दशमस्त्वमसीत्यादेस्तथाभूतस्य नापरोक्ष ज्ञानसाधनत्वं स्यात् । अपरोक्षविषयत्वमिति चेन्न । अपरोक्ष ज्ञानविषयत्वातिरिक्तस्यार्थेऽपरोक्षत्वस्याभावात् । तत्रैतज्ज्ञान विषयत्वेन तदुक्ताविनरेतराश्रयत्वम् । ज्ञानांतराभिप्राये तु स्वर्गादयोपि केषांचिदपरोक्षज्ञानविषया इत्यस्माकं तद्विषयः शब्दो अपरोक्षज्ञानं जनयेत् । धर्मिमात्राभिप्राये प्रत्यक्षेणावगम्यमाने घटे शतपलपरिमितोयमिति शब्दस्यापरोक्षज्ञानकरणतापत्तेः । स प्रकाराभिप्राये तु प्रकृतेरभावात् । नहि तत्वमस्यादिवाक्यप्रति पाद्यं ब्रह्मात्म्यैक्यं अपरोक्षमवभासते । तथासति शब्दवैयर्थ्यापत्तेः इति । एतेनापरोक्षविषयत्वानुमानमपि परास्तम् । यच्चापरोक्षत्वं इत्यादि । तज्ज्योतिष्टोमादिवाक्येपि तथा प्रयोगसंभवादाभास— समानयोगक्षेमम् । संसारस्याविद्यामयत्वादविद्यायाश्चापरोक्षज्ञानेन विना निर्वाहणायोगाद्वेदांतवाक्यस्यापरोक्षज्ञानसाधनत्वाभावे

मोक्षाभावप्रसंग इति चेन्न । ज्ञाननिवर्त्यताया निरस्तत्वात् । चित्तैकाग्रयरूपनिदध्यासनस्यापरोक्षज्ञानसाधनत्वोपपत्तेः । मनसो परोक्षज्ञानसाधनत्वं क्वापि नोपलब्धमिति चेत् । तत्किं शब्दस्य उपलब्धम् । यन्मनसा न मनुत इति श्रुतिविरुद्धं तदिति चेत् । न । श्रुतिर्मनसैवेदमाप्तव्यमिति श्रुत्या तत्प्रतिपक्षत्वात् । तद्वास्य विजिज्ञासितव्यादिश्रुतयस्तु परोक्षज्ञानेनापि सार्थकाः । परंपरया परोक्षज्ञानसाधनत्ववादिन्यो वा । स्पष्टं हि स्मृतयो वदन्ति । श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ । संशयं च पराणुद्य लभते ब्रह्मदर्शनमिति । शृणुयाद्यावदज्ञानपतिर्यावदुक्ता ध्यानं च यावदीक्षास्यान्नेक्षा क्वचन बाध्यत इति च । एतेन धर्मादिवाक्येति प्रसंगः शब्दत्वानुमानं च समाहितं वेदितव्यम् । अत एव प्रत्यक्षलक्षणे विशेषणप्रक्षेपोपि परास्तः । निर्निबन्धत्वात् । ये तु शब्द एवापरोक्षज्ञानजननाय प्रवृत्तोऽसंभावनादिप्रतिबद्धो मनननिदिध्यासनाभ्यां प्रतिबन्धापगमेतज्जनयतीति मन्यन्ते । ते प्रष्टव्याः । प्राङ्मनननिदिध्यासनाभ्यां किमसौ किमप्यकृत्वा परस्तादपरोक्षज्ञानं जनयति । उत परोक्षज्ञानं कृत्वा । नाद्यः । ( ५४० । ११ ) गृहीतसंगतेः शब्दाद्बोधोदयाभावस्य प्रमाणविरुद्धत्वात् । द्वितीयेपि विरम्य व्यापारापत्तिः । ततो वरं शब्दस्य तावतैव चरितार्थत्वकल्पनमित्येषा दिक् ।

( ५४४ । ३ ) मोक्षो हि नाम परमानंदावाप्तिविशिष्टात्यंतिकी दुःखनिवृत्तिः तदभावश्चैवमवगंतव्यः । नास्तिकोऽपि पुरुषः परमानंदनुभवी सर्वोपि दुःखी चेति । न च पुरुषांतरवर्तिनी

सुखदुःखे तदभावौ वा पुरुषांतरप्रत्यक्षविषयाविति कथं मोक्षाभावः प्रत्यक्षेणावसीयते । माभूत्प्रकाशाभावेन मोक्षाभावनिश्चयः । तत्सद्भावनिश्चयोपि दुर्घट एव । प्रमाणाभावादिति चेन्न । तत्र महतां प्रत्यक्षसद्भावात् । तस्य च तद्वाक्येन निश्चयोपपत्तेः । एवं तर्हि मयापि वक्तुं शक्यत एव । महीयसः पुरुषस्य लोकायताचार्यस्य मोक्षाभावोपि प्रत्यक्षस्तदवगमश्चास्माकं तद्वाक्येन भविष्यतीति । ( ५४४ । १६ ) तथाच सत्प्रतिपक्षतया पुनरनिश्चय एवेति चेन्न । लोकायताचार्यस्येतरेभ्योतिशयाभावात् । तपसा योगेन वा साधितस्य धर्मविशेषसतानंगीकारात् । भूतपरिणामविशेष एवातिशयोस्त्विति चेत् । स किं प्रत्यक्षोऽप्रत्यक्षो वा । नाद्यः । अनुपलंभात् । यादृशतादृशस्य भूतपरिणामविशेषस्य प्रकृतफलहेतुत्वे मानाभावात् । अन्यथातिप्रसक्तेः । न द्वितीयः । अतीन्द्रियार्थं निराकुर्वता तेनैवेतरवदात्मन्यपि तदभावस्य साधितत्वादिति । यथा युष्माभिरभिधीयते नास्त्येवमोक्षाभावसाक्षात्कारी महापुरुष इति तदाहमपि वदामि । नास्त्येवासौ महीयान् पुरुषो यः प्रत्यक्षेण मोक्षमीक्षेत । ( ५४५ । १ ) प्रमाणाभावादिति । तथाच पुनरनिश्चय इति चेन्न । महतां परावरज्ञानानां वशिष्ठादीनां विद्यमानत्वात् । वशिष्ठादयो योगर्धिसंपन्नया दिव्यया दृष्ट्या परपुरुषवर्तिनं मोक्षं साक्षात्कुर्वाणाः प्रत्यक्षेणैव दृश्यंतेतो न मोक्ष निश्चय इति । अस्मदादिभिरनुपलब्धत्वात्ते न संतीत्यत आह । निषिध्यंत इति । नहि ते वणिग्वीथ्यां वर्तते । अतो प्रकर्षादनुपलब्धेः संभवात् । तेषां माहात्म्यं च पुराणेषु श्रूयते

त्रिंध्यस्थगनसमुद्रपानादि । न च तान्यप्रमाणानि अप्रमाण्यकार-णाभावात् । वाक्यत्वेनैव प्रामाण्यप्रतिषेधे लोकायताचार्योक्तेरपि तत्प्रतिषेधप्रसंगादिति । आप्तसमस्तैश्वर्याणां विप्रलंभे प्रयोजना-भावात् । तद्वाक्यं तावत्प्रमाणांतर एव मोक्षविषयं तदीयं प्रत्यक्षं परेषां सिध्यति । एषां महतां वाक्यप्रामाण्यं प्रत्यक्षसंवेदेन उप-लभ्यते यतो तद्वृत्तावशः शापाश्च सत्या भवन्ति । किंच लोका-यताचार्यस्य परलोकाद्यतींद्रियार्थे नास्तित्वप्रतिपादनेन लभ्यंते प्रयोजनं न किमपि । तथाहि । ( ५४६ । ४ ) तदुक्तेरदृष्टं वा प्रयोजनं स्यात् दृष्टं वा । न तावददृष्टम् । परलोकादिनिवारणात् । अदृष्टं हि स्वर्गाद्युपयोग्यं वा स्यात् । देहांतरेणेहैव वा । नाद्यः । स्वर्गादिः परलोकस्य परेण प्रतिषिद्धत्वात् । न द्वितीयः । ( ५४६ । ५ ) देहात्मवादिनाऽस्यात्मनः परलोकस्य देहांतरस्य निवारणात् । न पि दृष्टम् । प्रतिपादकप्रतिपाद्ययोरर्थकामालाभा-नुपलंभादिति । वैदिकानां धर्माधर्मव्यवस्थापकैर्वचनैरुपरुद्धकाम-भोगानां धर्माद्यभावप्रतिपादनेन कामोपभोगोपरोधनिवृत्तिरूप-परोपकारस्तावदाचार्यस्य प्रयोजनमस्ति । ततो निरंकुशः कामोप-भोगः फलमिति चेन्न । धर्माद्यभावज्ञाने यदि शिष्यो गुरुरर्थ-जिहीर्षया तमेव हन्यात् । तदोपकर्तुरपकारो महान्प्रत्यवायहेतुरिति न बोधयितुं शक्यते प्रत्यवायस्यानंगीकारात् । उपकर्तारं प्रत्यु-पकुर्वन्तीत्येतदपि धर्मादिवासनायां सत्यामेव । सा तु तेनैव निरोपिता । अतो नास्त्येवाचार्यस्य प्रयोजनम् । प्रत्युतस्वजीवन-हानिलक्षणोनार्थ एव । एवं विधेयानामप्यन्योन्यधनवनिताद्यप-

हाराय परस्परवधादावेव प्रवृत्तिर्न तु कामोपभोगावसरः। महतानर्थे नाक्रांतोऽल्पीयान् कामोपभोगोनर्थ एवेति । स्वानर्थहेतुं स्वयं संपादयन्न प्रेक्षावान् । अतस्तद्वचनमप्रमाणं इदानीं वेदेनापि तं सिसाधयिषुस्तत्प्रामाण्ये विप्रतिपन्नं प्रति किं संवादरहितत्वाद्वेदस्य प्रामाण्यमुच्यते उत वाक्यत्वादुन्मत्तवाक्यवत्। अथवोन्मत्तवाक्यादनिश्चितविशेषत्वादथबाधितत्वादिति विकल्प्य आद्येपि किं सर्वस्य संवादो नास्ति उतेकदेशस्येति । नाद्यः । ( ५४७।२ ) ऐश्वर्यादि साधनतया योगादिकमुपदिशतो वेदभागस्य तदनुष्टानवतात्तत्फलदर्शनेन प्रत्यक्षसंवादित्वात् । द्वितीयेपि किमेकदेशस्य संवादराहित्यात्सर्वस्याप्रामाण्यं उत तन्मात्रस्य । नाद्यः । प्रत्यक्षस्यापि तथात्वप्रसंगात् । तत्रापि सुखादिविषये संवादराहित्यात् । न द्वितीयः । अस्मत्सुखादि विषयज्ञानस्याप्रामाण्यप्रसंगात् । यदि प्रत्यक्षस्य स्वतः प्रामाण्यमागमस्य कथं न भवेत् । यदि वाक्यत्वमात्रेण उन्मत्तवाक्यवदागमस्य नो मानत्वमुच्यते । तर्ह्यक्षजत्वेन शुक्तिरजतादिविषयाक्षजत्वसंभाद्यक्षजस्याप्यप्रामाण्यं स्यादविशेषात् । न तृतीयः । बाधितार्थादुन्मत्तवाक्यादबाधितस्य वेदवाक्यस्याविशेषसद्भावात् । न चतुर्थः । वैदिकार्थस्य प्रमाणांतरविषयत्वेन न बाधायोगात् योगिनां प्रवृत्तिः सफला पेक्षवत्प्रवृत्तित्वात्संमतवत् । अपरे पुनरनुमीयते । दुःखसंततिरत्यंतमुच्छिद्यते संततित्वात् । दीपज्वाला संततिवदिति । तदसत् । सकलजीवगतदुःखसंततिपक्षीकारे अंशे बाधितत्वात् । नित्यसंसारिणां केषांचित्सत्वत्य तैरप्यंगीकृत–

त्वात् समर्थयिष्यमाणत्वाच्च । तद्व्यतिरिक्तजीवगतदुःखसंतति-पक्षीकारे तु तत्रैव व्यभिचारात् । पार्थिवपरमाणुरूपादिसंताने व्यभिचारच्च । कालक्षणसंताने व्यभिचाराश्च । किंच दुःख संतति शब्देन दुःखान्येवोच्यंते । उत तद्धर्मः कश्चित् । आद्ये (५४७।२०) सिद्धसाधनता । मोक्षमनंगीकुर्वतापि दुःखानां विनाशिताभ्युपगमात् । अत एवात्यंतमित्युक्तमिति चेत् । कोस्यार्थः किं सर्वाण्यपि दुःखान्युछिद्यंत इति । उत प्रत्येकं निःशेषतयोछिद्यंत इति । अथवा तत्र दुःखांतरानुत्पादेनेति (५४७ २२)। न प्रथमः । सिद्धसाधनताऽनिस्तारात् । सर्वेषा–मपि दुःखानांपरेणानिश्चतया स्वीकृतत्वात् । अतएव न द्वितीयः । नहि दुःखं सावयवद्रव्यं । येन सविशेषमुछिद्यत इति शंक्येत । न तृतीयः । दृष्टांतस्य साध्यविकलत्वात् । नहि दीपज्वालासंततिरेव मुछिद्यते । तत्रैव पुनर्ज्वालांतरोदयसंभवात् । न द्वितीयः । दुःखधर्मोहि जातिर्वा तदन्यो वा । आद्ये अपसिद्धांतः । जातेर्नित्यत्वांगीकारात् । न द्वितीयः । आश्रयासिद्धेः । गुणेषु जातिव्यतिरिक्त धर्मानंगीकारात् । अंगीकारेप्यर्थांतरता स्यात् । (५४७ । २५)

(५४७ । २६) नहि दुःखधर्मस्य कस्यचिद्विनाशसिद्धौ मोक्षसिद्धिरिति । आत्मा कदाचिन् ध्वस्ताशेषविशेष गुणो विभुत्वे सति कार्यविशेषगुणवत्वात् । महाप्रलयावस्थायामाकाशवदिति (५४९ । १) चासत् सर्वात्मपक्षीकारे परमेश्वरात्मनिबाधात् । असिद्धेश्च । जीवात्मपक्षीकारेपि संसारित्वैकस्वभावानां जीवानां स्वयमेव प्रकृतत्वेन तत्र बाधात् । तदतिरिक्तजीवपक्षीकारे

तत्रैवानैकांत्यात् । जीवात्मनां विभुत्वाभावेनासिद्धेश्च । आत्मत्वं कदाचिध्द्वस्ताशेषविशेषगुणवृत्ति विभुवृत्तिजातित्वादित्येतद-प्यर्थांतरत्वेन पराहतं । अशेषविशेषगुणध्वंसस्य मोक्षाभावात् । एतेन देवदत्तो देवदत्ताधर्मसमानकालीनदेवदत्तगतत्वानधिकरण दुःखध्वंसाधिकरणं दुःखित्वाद्यज्ञदत्तवदिति विशिष्ट व्यतिरेक्य-नुमानमपि निरस्तं । अर्थांतरापरिहारादित्यास्तां प्रपंचः ।

अर्थं प्रतिस्थितं ह्यक्षं प्रत्यक्षमिति प्रादिसमासः । नाव्ययीभावः तथात्वे प्रत्यक्षस्येति षष्टी न श्रूयेत । प्रत्यक्षशब्दानुसारादनुमेति प्रकीर्तिता । आसमंतादतींद्रियं गमयतीत्यागमः । आ सम्यक् गम्यतेऽनेनेतिआगमः(५४९ १२)जिनवाक्याद्धर्मादिसिद्धिरितिवदता किं प्रमाणमुक्तं भवति । आगम इति चेन्न । सम्यक् प्रतीक्षाद्यनधि गतार्थप्रतिपादकस्यैवागमत्वात् । जिनवाक्यस्य तदसिद्धेः । जिनोहि प्रमाणेनार्थमुपलभ्य वाक्यं प्रणीतंवाऽनान्यथावा । द्वितीये पौरुषेयस्य निर्मूलस्योन्मत्तवाक्यवत्सम्यक्त्वं दुर्लभं । आद्ये प्रत्यक्षेणानुमानेनवावगतौ तदनधिगतार्थताऽसंभवः । वाक्यांतरेणचेदं अंधपरंपरापत्त्या पुनरसम्यक्त्वमेव । किंच जिनस्याप्तत्वं किं प्रत्यक्षसिद्धमनुमानसिद्धं वा वाक्यसिद्धं वा । नाद्यः । आप्तत्वरूपायाः परचित्तवृत्तेरपरोक्षविषयत्वाभावात् । नाप्यस्खलितवाक्याद्यनुमानेनास्य प्रत्यक्षाद्यनुसरणेनार्थगमकत्वा-भावेनानुमानत्वाभावात् । न च तत्प्रकृतेऽस्ति । तृतीयेपि आप्तत्व-विषयं वाक्यं निर्मूलं चेदसम्यक् सम्यगेव । वाक्यांतर मूलत्वेपि तथैव । किंच जिनवाक्यं प्रमाणं आप्तवाक्यात् इत्यस्य कोऽर्थः ।

आप्तस्यवाक्यत्वादिति वा आप्तिमूलत्वाक्यत्वादिति वा । आद्ये क्वचिदाप्तस्य विप्रलंभकस्याज्ञस्य वा वाक्ये व्यभिचारः । द्वितीये विशेषणासिद्धिः । तत्वज्ञानादिलक्षणा खल्वाप्तिः । तत्र धर्मादि विषयं तत्वज्ञानं तावन्नजिनस्य प्रत्यक्ष जन्यं । विषयाम् प्रति स्थितस्याक्षस्य प्रत्यक्षत्वात् । धर्मादेश्चाक्षाविषयत्वात् । अत एव नानुमानजन्यं । वाक्यांतराम्युपगमेत्वंधपरंपरैव । एवमाविप्रलिप्सापि दुरधिगमा । अत एवाप्तत्वसाधकमनुमानं कालात्ययापदिष्टं । आप्तेरुक्तविधया बाधितत्वात् अन्येषामप्रत्यक्षेर्थेस्य प्रत्यक्षं प्रवर्तत इत्यतो न विरोध इति चेन्न । पुरुषत्वादिना सप्रतिपक्षत्वात् । (५५० १) नैवमस्मन्मते। यद्वै किंचनमनुरवदत्तद्भेषजमित्यादि निश्चयाच्च(१२)सुखं भावस्तारतम्योपेतत्वाद्दुःखादिवदिति यदि सुखं निरतिशयं स्यात्तदा प्रेक्षावतां विषयभोगातिरेकोपादानं व्यर्थं स्यात् । दृश्यते च तदिति । दुःखातिरेकनिवृत्त्यर्थं तदिति चेन्न । सुखस्याभावतासिद्धायामेव एवं कल्पनारंभयात् । न च सा सिद्धा । दुःखं सुखाभाव इत्यपि वक्तुं शक्यत्वात् । सुखमभावो वस्तुत्वात्संमताभाववत् । एवं वादी कंचनभावमप्यंगीकरोति वा नवा । नाद्यः । तत्रैव व्यभिचारात् । द्वितीये किं सर्वेपि पदार्थाः किं प्रागभावात्मकाः प्रध्वंसरूपाः अत्यंताभावरूपाः अन्योन्याभावात्मका वा । नाद्यः । घटादीनां अनादित्वापत्तेः । न द्वितीयः । नित्यत्वापत्तेः । न तृतीयः अनादिनित्यत्वापत्तेः । न चतुर्थः । तस्याभ्युपगमात् । न च भावत्वांगीकारविरोधः । अभावाभावतायाः भावत्वात् । (५५१ ७) सुखं हि स्वान्योन्याभावदुःखाद्य-

न्योन्याभावः । एवं भूतंचाभावत्वं अंगीक्रियते । ( ५५१ २६ )
नात्मज्ञानं देवदत्तोगामिव मोक्षम् ददाति । किंतु प्रकाशोंध-
कारमिव विरोधात् दुःखं निवर्तयति। तत्र किमचैतन्यं करिष्यति ।
प्रकाशः खल्वंधकार विरोधित्वान्निवर्तयन्नुत्पत्यनंतरमेव निवर्तयति
नतु विलंबेन । विलंबेविरोधस्यैव निर्वाहात् । तत्रापि तथैवेति चेन्न ।
तथात्वे ज्ञानिनां जिनादीनां देहधारणासंभवात् । मुक्तौविलंबे
कारणाभावात् । देह दिमत्वेच दुःखादेरवर्जनीयत्वात् । अयमत्र-
प्रयोगः (५५२ ६) । दुःखादिकमात्मतत्वज्ञानविरोधि न भवति
बहुलं कालं तेन सह स्थितत्वात् । सम्मतवदिति । किंचात्म-
तत्वज्ञानं आमोक्षादेकं । ज्ञानानां क्षणिकत्वदर्शनत् । तथाच
यदनंतरं मोक्षोभिलप्यते तज्जिनस्य चरमज्ञानं न मोक्षसाधनमात्मज्ञ-
ज्ञानत्वात् प्रथमादि ज्ञानवत् । अन्यथा प्रथममेव मोक्षंसाधयेद-
विशेषादिति । नवयमीश्वरज्ञानं मोक्षसाधनमाचक्ष्महे । किन्नाम
प्रसन्नः परमेश्वरः एव । ज्ञानं तु प्रसाद साधनत्वान्मोक्षसाधन-
मिति गीयते । अतस्तस्य संकल्पानुसारेण भवत्यसौ मुक्तिः ।
विमतं कर्म मोक्षसाधनं न भवति । अचेतनत्वात् पटवत् ।
किंपामोक्षप्राप्तेः क्रियमाणमेकमेव कर्मो उतानेकानि । नाद्यः ।
क्रियाणामनेकत्वदर्शनात् । प्रतिक्रियं कर्मोत्पत्तेः । एकत्वेच
जातस्यैव जन्मवा क्रियाणां वैयर्थ्यं वा विरम्य व्यापारोवापद्येत
यथादानीं प्रथमक्रियोत्तरकालं जातंकर्मा मोक्षसाधनं न भवति ।
तथा विवक्षितकालेपि मोक्षकारणं न स्यात् । कर्मत्वात् । एक-
स्यापि कर्मणः कालभेदेन भेदात्पक्ष सपक्षत्वं युज्यते । विपक्षे तुउत्प-

त्यनंतरमेव मोक्षसाधयेदविशेषादिति । एवं कर्मणां बाहुल्यांगिका रेपि प्रियमकर्मवत् चरमस्यापि मोक्षसाधनत्वाभावः साधनीयः । नच पूर्वसहकृतस्यांतिमस्य कर्मणो मोक्ष साधनत्वं वाच्यं । इयत्ताभावेनानियत कारणत्वापत्तेः न हि ज्ञानोदयानंतरनियतैव- कालेनेयंत्येव कर्मणि कृत्वापवृज्यत इति नियमः प्रमाणवान् । ( ५५३ ४ ) सिद्धांते संसारबंध हानिः समर्थपुरुषांतरप्रीति निबंधनाबंधहानित्वात् । राजप्रसादाधीन भृत्य निगडबंध हनिवत् । यश्चासौ पुरुषः सएवेश्वरः । विप्रतिपन्ना प्रीतिर्गुणोत्कर्षादिज्ञानजा । अनिजप्रीतित्वात् राजप्रीतिवत् । कर्मादिनाभववन्नीश्वर प्रसोदोपि गुणोत्कर्षादिज्ञाने सत्येवेति न दोषः । यद्वा ईश्वर विषयं गुणो- त्कर्षादिज्ञानं तत्प्रीतिजनकं गुणोत्कर्षादिज्ञानत्वात् सम्मतवत् । नचेश्वरासिध्यादोषः प्रथमानुमानेन तस्य सिद्धत्वात् ।

ननु परप्रसादनिरपेक्ष्यैव काचिद्बंधहानिर्दश्यते । तत्र हेतोर्व्यभिचार इतिचेन्न । पक्षतुल्यत्वात् । सर्वाप्यनिष्टनिवृत्तिः ईश्वर प्रसादाधीनेति हि तत्वविदां पंथाः ( ५५३ १० ) । अहिंसायाश्च धर्मत्वं कन मानेन गम्यते । हिंसाया एव धर्मत्व- मित्युक्ते स्यात्किमुत्तरं । न किमपि । भिन्नकाचर्योनाप्त इति चेत् । जिनोपि कथमाप्तः । (अनु)धर्मस्य सुखहेतुत्वमपि केनावगम्यते । हत्याया मोक्षहेतुत्वं कुतो मानान्निर्णयते ।

न च शून्य ज्ञानान्मोक्षः । ज्ञानादयेपि मोक्षाभावात् । अंगीक्रियैतेच शून्यज्ञानसमानंतरमपि संसरंतः पुरुषाः परेण नहि प्रतिबंधवशात्तथा । तस्यापि संवृत कार्यत्वात् तस्याश्च नि-

वृत्तत्वात् । ज्ञानेनानिवृत्तत्वेन कदापि निवृत्तिः । ( अनु. ) परप्रसादजेष्टोस्तु विलंबो नाम युज्यते । पुमिछाधीनता नोचेत् विलंब किं कुतो भवेत् । ( ५५४ । १४ ) परप्रसादानपेक्षेष्वपि कार्येषु विलंबोऽस्ति । त्रिवृन्मूलाभ्यवहरणादौ कृतेपि विरोचनादेः विलंबदर्शनात् । तत्कथमुच्यते पुमिच्छाधीनताभावे विलंबो न भवेदिति । मैवम् । तत्रापि विलंबेप्येशेच्छानिमित्तत्वात् दृष्ट– सामग्र्या वैकल्यभावात् । न च धर्मवैकल्यं कल्पयितुं युक्तम् । ( ५५४ । १९ ) उत्तरकालमपि कार्यानुदयप्रसंगात् । नहि तन्मध्ये कश्चिद्धर्मोनुष्ठीयते । विद्यमान एव प्रागलब्धवृत्तिर्धर्म इति चेन्न । तथात्वे पश्चादप्यलब्धवृत्तिः न भवेत् । पश्चाद्धर्मवृत्तौ किंचित्कारणमस्ति चेत्यैवेश्वरेच्छा । किंच बौद्धेन कारणे सति कार्यं भवतीति नियमस्यांगीकाराच्च न विलंबः संभवति ।

विज्ञानमेकमेव तत्वम् । ततोन्यदस्तीति वेदनाच्च न मोक्षः । पूर्वोक्तप्रक्रियानुसंधेया । वैभाषिकसौत्रांतिकपक्षेपि न मोक्षसाधनं संभवति । जीवानामपि क्षणिकत्वात् । अकृताभ्या– गमकृतविप्रणाशाच्च । प्रकृतिपुरुषविवेकान् मोक्षवादिन्यः श्रुतयः परंपरया भगवत्प्रसादद्वारा मोक्षं वदंति लांगलेन वयं जीवाम इति यथा ।

योगशास्त्रप्रणेता पतंजलिःयतोऽभ्युदय निःश्रेयससिद्धिः स धर्म इति न्यायसूत्रम् । धर्मोऽपि साक्षान्मोक्षहेतुः । अपि तु ईश्वरप्रसादसहकृत एव । यथोक्तम् । तच्चेश्वरचोदनाभि- व्यक्तोद्धर्मादेवेति । तुष्टं च तुष्टेर्मोक्षयता बहानुतुष्टवंश्वतः पुनः ।

कारागारमिदं विश्वं यस्य वंदे तमीश्वरमिति । पतंजलिस्तु स्पष्ट– माचष्टे तपः स्वाध्यायेश्वरप्रणिधानादिक्रियायोग इत्यादि । अक्षयपादो यद्यपि प्रमाणादिषोडशपदार्थतत्वज्ञानान्निश्रेयसाधिगम इत्याह । तथापि प्रमाणादिपंचदशपदार्थतत्वज्ञानस्यात्मादिद्वाद- शविधप्रमेयतत्वज्ञानहेतुत्वमेव । आत्मशरीरइन्द्रियार्थबुद्धिमनः प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् इति तु शब्दकरणात् ।

आत्मादिज्ञानमपि न साक्षान्मोक्षसाधनम् । किंनाम परमेश्वरप्रसादोपेतमेव । स्वर्गापवर्गयोः मार्गमामनन्ति मनीषिणः यदुपास्तिमसावत्र परमात्मा निरूप्यत इति संप्रदायविद्वचनात् । ईशस्य प्रसादतो मुक्तिं ब्रुवाणाप्येते किंचिदयुक्तमाहुर्यतोतोनुप- पन्नभाषिण इत्यर्थः । वैशेषिकादयस्तत्वविदइव ज्ञानात्पूर्वेषां कर्मणां ज्ञानादेव विनाशं न मन्यन्ते । वैशेषिकैरयमसदकारित्वनेश्वरप्र– सादोंगीकृतः । पतंजलिरपि – तपः स्वाध्यायादिसमानकक्षतामेव ईशप्रसादः स्यात् । नैय्यायिकोप्यात्मतत्वज्ञानमेव मोक्षसाधनं ईश्वरप्रसादस्तु सहकारिमात्रमित्याश्रिताः द्वितीयसूत्रे तथैव व्युत्पादितत्वात् ।

वैशिषिकादयो ज्ञानात्पूर्वेषामपि कर्मणां भोगेनैव क्षयमाहुः ( ५५७ । ५ ) विमतं कर्मफलभोगविनाश्यं कर्मत्वात् संप्रतिप- न्नकर्मवदित्यनुमानं तु कृतप्रायश्चित्तकर्मण्यनैकांतिकम् । अकृत– प्रायश्चित्तकर्मत्वं हेतुरिति चेत् । किमिदं प्रायश्चित्तं नाम । पापनिवृत्यर्थत्वेन विहितोत्रन विशेष इति चेत् । तर्हि महानु– भावानां अनुग्रहादिना विनष्टे कर्मणि व्यभिचारः । पापनिवृत्ति-

हेतुमात्रं प्रायश्चित्तं विवक्षितमिति चेत् । तथापि महदवज्ञानादिना विनष्टे पुण्ये व्यभिचारः । क्षयहेत्वंतररहितः कर्मत्वं हेतुरिति चेन्न । ज्ञानस्यैव क्षयहेतोः सत्त्वेनासिद्धेः । ज्ञानं न कर्मक्षयहेतुतया विहितमिति चेत् । तर्हि विधिरेव हेतुत्वं गमयति । तथासति समाधेरपि कायव्यूहनिर्माणादौ हेतुत्वं न स्यात् ।

आर्थवादिकं फलमविरुद्धं स्वीक्रियत इति चेत् । समं प्रकृतेपि ।

तमेवमिति पशुपुरुषज्ञानान्मोक्षः श्रूयते । ( ५५८ । २ ) पशुपुरुषज्ञानमपि पशुपतेरनुग्रहे परमोपयोगीति मोक्षसाधनमुच्यते । नान्य इति च न विरुद्धम् । साधनतत्साधनसाधनस्यापि परित्यागे फलानुदयादिति चेत् । किमेतत्पुरुषशब्दस्य विष्णौ शक्त्यभावात् कल्प्यते, तात्पर्यज्ञापकाभावाद्वा, बाधकसद्भावाद्वा ।

नाद्यः नारायणानुवाके 'सर्वे निमेषाजज्ञिरे विद्युतः पुरुषादधि' इति पुरुषशब्दस्य हरौ प्रयोगात् । अस्ति च अतिशायित्वलिंगात् विष्णुत्वं महोदधिशयोंतक इत्यादिना तस्य विष्णुलिंगत्वावगमात् ।

नारायणानुवाकेन 'तस्येशे कश्चन तस्य नाम महद्यशः' इति वाक्येन तस्य पुरुषस्य अधिपतिः निषिद्धः । ईशे ईष्टे । महदिति यशश्चेति तस्य पुरुषस्य नाम । 'विश्वतः परमां नित्यं विश्वं नारायणं हरिम् ' । परमश्च मश्चेति परमा । तं परमा इति सर्वाधिकत्वमुच्यते । अस्य समाधिकरहित्यस्य पशावनुपपत्तेः न तद्विषयोऽयं पुरुषशब्दः । किंतु नारायणादिनाम्ना अतिशयत्वा-

दिलिंगेन च विष्णुविषय एव ।

(५५८ । १७) पुरुषशब्दस्य च मुख्योऽर्थः पूर्णत्वम् । तच्च विष्णोरेव समाधिकराहित्यादुच्यते इति । अस्त्वेवं पुरुष शब्दस्य विष्णुवाचकत्वशक्तिस्तथापि पुरुषसूक्ते ज्ञापकाभावात्तत्परत्वं नास्तीति द्वितीयं निराकरोति । पुरुष एवेति यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति । यद्भूतं यच्च भव्यं यच्च प्रवदमुक्तं विश्वमिदं सर्वं पुरुष एव पुरुषाधीनमेव । यत ऐश्वमन्नेनान्नमदनीयममुक्तवर्गमतिरोहति अतिक्रामति । अमुक्ताधिपतिरिति यावत् । तस्मादमृतत्वस्योतभावभवित्रोरभेदामुक्तवर्गस्यापिशानः । भावे भवित्रोरभेदादमृतत्वस्येति प्रयोगः ।

( ५५८ । १९ ) संसारे स्वाधीनं जगद्यदि मुक्तौ स्वाधीनतां जह्यात्तदा प्रेक्षावान्न मोचयेत् । अतो मुक्तावपि तदधीनमेवेति मुक्तेशत्वमाह श्रुतिः । तच्च मुक्तानां परमागतिरित्यादिना विष्णोरेवावगतम् पशोस्त्वसंभावितमेवेत्यतः पुरुषसूक्तं विष्णुपरमेवेति ज्ञायते ।

ननु च पुरुष एवेदं सर्वमिति पुरुषस्यात्र सर्वात्मकत्वमेवोदितम् । तत्कथं मुक्तामुक्तपरेशत्वमाह श्रुतिरिति । तत्राह । अमृतेति । उत्तरार्धे मुक्तेशानत्वस्योक्तत्वात् , पूर्वार्धेऽमुक्तस्य सर्वस्येशानतैवोदिता ज्ञातव्या । न तु सर्वत्वम् । नहि कोऽपि वादी मुक्तौ भेदममुक्तौ अभेदमंगीकरोति । नापि युज्यते । पूर्वमभिन्नस्य पश्चाद्भेदादर्शनात् ।

यदीति पूर्वार्धे पुरुषस्य सर्वेशानत्वमुदितं स्यात् । तर्हि

उत्तरार्धे अमृतत्वस्येतेशान इत्युतरशब्दो वृथा स्यात्। यतो तच्छब्दो हीशत्वस्य समुच्चयवाची। अर्थांतरस्य असंभवात्। न च द्वयोरीशसत्वयोरनुक्तौ समुच्चयोक्तेरवकाशोऽस्ति। तस्मादुत शब्दो वृथैवेति शास्त्रांतरे ब्रह्माणां च पुरुष एवेदं सर्वमिति पुरुषेणैवेदं सर्वं व्याप्तं आतृणादकीपात्सर्वं भगवानिति मिथ्यादृष्टिरेषेति।

( ५५९ । ५ ) किंच अस्य पुरुषस्यैतावन्महिमा यः पूर्वं वा क्योक्त इत्युत्तरवाक्यबलात्पुरुष एवेदमित्येतत्पुरुषस्य महिम्नो वाचकं वच इति तावत् ज्ञायते। ततश्च महिमाप्रतिपादकं यथा स्यात्तथा व्याख्येयम्। न च सर्वात्मत्वं महिमा। अपकर्षहेतुत्वात्। किंतु सर्वाधिपत्यमेव।

न च तदतिरिक्तमहिम्नो वचनम्। संकोचे कारणाभावात्। इतोऽप्येतदेवमित्याह सोमृतस्येति। उत्तरार्धे तावदमुक्ताधिपत्यं हेतुत्वेनोपादाय यदन्हेनेतिमुक्ताधिपत्यं प्रतिजानीते श्रुतिरिति ज्ञायते। उत्तरार्धे तत्पूर्वार्धोक्तममुक्ताधिपत्यं हेतुत्वेन अनूद्य पुरुषस्य मुक्तिगेशतां विधत्ते श्रुतिरिति ज्ञायतेऽसौ मृतस्याभयस्येशो मर्त्यमन्नं यदत्यगादिति भागवतवचनेन तथा व्याख्यातत्वात्। अत एव अन्नेन दिव्यभोगेन यदतिरोहति अधिरोहति एधत्ते तस्यामृतत्वस्य देवत्वस्य ईशान इति व्याख्यानमयुक्तम्।

( ५५९ । १४ ) एतेन पुरुषशब्दस्य विष्णुविषयत्वे सर्वात्मकत्वं पूर्वार्धोक्तिबाधकमिति निरस्तम्।

अत एव तृतीयपक्षोऽपि ।

मोक्षार्थी न प्रवर्तेत । तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात् प्रत्यवायजिघांसयेति । एतदपि नान्यः पंथेत्यनेन निराकृतम् । अपि च नित्यनैमीत्तिककर्मणां नियमेन सम्यगनुष्ठानं तावदशक्यमेव । चरंति 'देवा विहितं समस्तमर्घमेव मुनयो दर्शयंतो मनुष्या' इत्यादि श्रुतः । नापि निषिद्धाकरणं संभावितम् । प्रामादिकानां मानसवाचिककायिकानामपरिहार्यत्वात् । प्रायश्चित्तात्क्षय इति चेन्न । तस्यापि सम्यगनुष्ठातुमशक्यत्वात् ।

पूर्वोपार्जितकर्मणां भोगेन क्षयस्त्वासंभावितएव अनंतत्वादित्यलम् ।

॥ इति समुच्चयवादनिरासः ॥

( ५६० । २२ ) यथा अन्नं मधुसंयुक्तं मधु चान्नेन संयुतम् । एवं तपश्च विद्याच संयुक्ते भेषजं महदित्यादीनां परोक्षाज्ञानविषयत्वात् । अपरोक्षज्ञानविषयत्वेष्यानंदवृध्यर्थत्वात् ।

मायावादिनो वदंति ।

यद्यद्वैतज्ञानेन मुक्तिः तर्हि ज्ञानोत्तरकालं अवस्था स्यात् । ( ५३१ । १२ ) तथा अंगीक्रियते च जीवन्मुक्तिः जीवन्मुक्त्यभावप्रसंगः ।

ज्ञानेनाविद्यायां निवृत्तायामपि तत्संस्कारेण द्वैतदर्शनानुवृत्तिर्भवतीति चेन्न । संस्कारस्याविद्यकार्यत्वेऽस्थानानुपपत्तेः ।

( ५६१ । १७ ) एतेन अविद्यालेशावस्थानपक्षोऽपि प्रतिक्षिप्तः । लेशश्च पटस्य तंतुरिवावयवो वा स्यात्प्रदेशो वा धर्मो वा । नाद्यः । अकार्यत्वादविद्यायाः । न द्वितीयः प्रदेशानंगीकारात् । प्रदेशिनो निवृत्तौ प्रदेशावस्थानासंभवाच्च । न तृतीयः । धर्मिणोपगमे धर्मानुपगमानुपपत्तेः ।

तस्याभिध्यानात् इति । श्वेताश्वतरमंत्रस्यायमर्थः । भूयो भूयः तस्मिन्मनसो योजनात् । यो जायते तत्त्वभावः तत्त्वज्ञानं तस्मादुदितात्तस्य परमेश्वरस्याभिदानादेरनुग्रहात् । कर्मक्षयांते विश्वबंधकमायानिवृत्तिः इत्यर्थः ।

॥ इति तृतीयाध्यायस्य तृतीयः पादः ॥

स्वाधिकारयत्नः कथंचिन्नोपपद्यते । कथंचिदधिके यत्ने दोषः कश्चित् समापतेत् । ह्रासोऽपि मानुषादीनां आनंदस्य विकर्मणा । भवेन्मुक्तौ विशेषेण स्वोच्चानामपराधतः। (५६९ १६) करणस्यापीत्यपेरर्थः । आनंदस्येत्युपलक्षणं । ह्रासो नामानभिव्यक्तिः । सर्वेश्वरेच्छाधीनाप्रकृत्याद्यावरणानामपसृतत्वात् । स्वोत्तमविषयापराधाद्विशेषेणानंदह्रासो भवति । यश्चश्रोत्रियोऽवृजिनोकामहतइति श्रोत्रियस्याकामहतस्येतिचोक्तअकामहतत्वादिक किं प्रकृतानां संसारिणामेव विशेषणमुत संसार्यंतरसमुच्चयार्थं । नाद्यः । संभवे व्यभिचारेच विशेषणमर्थवत् । न ब्रह्मादयः केनचिदश्रोत्रियत्वादि गुणाः संति । येन व्यभिचारनिवारणार्थमेतत्स्यात् नापि संसारिष्वकामहतत्वादिकं संभवति । ( ५ ) यत्र लोकेका-

मस्येच्छायाः कामाविषया तत्रमाममृतंमुक्त कृधि कुर्वित्यर्थः ।

( ७ ) आप्तकामत्वस्य मुक्त लक्षणत्वेन श्रुत्युक्तत्वेत देवसंसारिष्वसंभविस्यात् । आकामहततत्त्वस्य आप्तकामत्वं हेतुः । नैमित्तिकस्यसंभवोस्ति । तत्र निमित्तं चाप्तकामत्वं न संभवतीत्युक्तम् । ततोनैमित्तिकमकामहतत्वमपि तत्रासंभवतीति । (५७२ १६)ब्रह्मादयो नाकामरहिताः असुप्तामूढचेतत्वादेवत्तवत् ! चेतनशब्देन आत्मत्वमात्रस्य विवक्षितत्वात् ।

चेतनत्वादित्येव हेतुर्वा । तथात्वेऽपि न व्यभिचारः । सुप्त्यादावप्यात्मनः (२२) कामसद्भावात् । न चैवं सति यत्र सुप्तो नकंचन कामं कामयत इत्यादि श्रुत्याऽनुपलंभेनच विरोधः । विद्यमानानामपि कामानां अव्यक्तत्वेनातदुपपत्तेः । व्यक्तकामाभिप्रायेण च प्राग्विशेषणमुपात्तमिति ।

( अनु ) यत्कामः स्वापमाप्नोति तदेवोत्थापितः पुनः अवशोऽपि व्याहरति कुतः सुप्तावकामता । नन्वस्य हेतोः मुक्तेषु व्यभिचारः इति चेन्न । तेषामपि कामसद्भावात् ।

ः सोश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता ।, कामान्नीकामरूप्यनुसंचरन् । इत्यादिश्रुतेः ।

काम्यन्त इति कामाः विषयाः कर्माणि यत्प्रत्ययः स यदि पितृलोककामो भवति इत्यादयश्च । सर्वैः प्रमुच्यंते कामायेस्य हृदि श्रिताः । अथ मर्त्यामृतो भवतीति श्रुत्या अंतःकरणपरिणतानां कामानामेवअभावोऽभिधीयते ।

( ५७३ १९ ) ननु एतत्सर्वं मन एव वेति श्रुत्या सर्वे-

षामपि कामानां मनः परिणामत्वमेव । नत्वात्मधर्म कामास्तीति चेन्न । मुक्तानामन्तःकरणविधुराणामपि कामित्वस्य श्रुतिसिद्ध-त्वात् ।

अवृजिनत्वं च मुक्तेष्वेव संभवति । वृजिनशब्दस्य दुःख पापादिवाचित्वात् । दुःखादेश्च संसारिषु नियमेन संभवात् । अप्रियं वृजिनं दुःखमिति शब्दनिर्णये ।

'युवा स्यात् साधु युवाऽध्यायकः । अशिष्ठो दृढिष्ठो बलिष्ठः ।' इत्येतन्मुक्तविषयम् । 'तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्' इत्यमुक्तविषयम् ।

तथाच उभयपरामर्शेन मानुषानंदमिति । उच्यते । संसारिणो मनुष्यस्यानंदः कियान्परमः इत्यपेक्षायां 'तस्य...' इत्येतदुच्यते । तस्यैव मुक्तस्य आनंदसाधुयुवेत्यादिवाक्येन अभिधीयते । ततश्च अयमेवानन्दो मुक्त्याद्यवस्थागतस्य मानुष-स्यैकानंद इत्यभिधीयते । ये मनुष्यानंदाः ते शतं मनुष्यगंध-र्वाणां एकानदः । तस्यैव मनुष्यगंधर्वस्य मुक्तस्य च एकानन्दः ।

अयमत्र विवेकः । संसारमनुष्यशतानंदाः संसारिणो मनुष्यगंधर्वस्यैकानंदः । मुक्तानां मनुष्याणां शतानंदाः मुक्तस्य गंधर्वस्यैकानंद इति । एवं उत्तरत्रापि योज्यम् ।

बृहदारण्यक वाक्यमप्येवं योजनीयम् । देवादयो मानु-षादिभ्योऽधिकमुक्तिफलभाजः तदपेक्षया अधिकसाधनत्वात् ।

यो यदपेक्षया अधिकसाधनः सः तदपेक्षया साध्याधिक्यवान् यथेति । यदिदेवादयो मानुषादिभ्योऽधिकमौक्तफलभाजो न स्युः तदा तदधिकं तत्साधनाधिक्यार्थप्रयत्नवंतो न स्युः । अनधिकफलाय च अधिकं प्रयत्नमातिष्ठमाना न प्रेक्षावन्तो भवेयुरिति ।

विपक्षे बाधकाभावात् नाप्रयोजको हेतुः । दृष्टं दण्ड्यादिकं अदृष्टधर्मादिकं च साधनांतर्भूतमेवेति व्यभिचारः ।

( ५७७ । २० ) एवं मानुषादयो देवादिभ्योल्पमुक्तिफलभाजः तदपेक्षयाल्पसाधनवत्वाद्यो यदपेक्षयाल्पसाधनवान्स ततोऽल्पफलवान्दृष्टः यथा संमतः । देवादयो मानुषांताः मुक्तौ फलतारतम्यवंतः साधनतारतम्योपेतत्वाद्येयत्साधनताःतम्यवंतस्ते तत्साधनतारतम्यवन्तो यथा संमताः । ब्रह्मादिमानुषांतैरनुष्ठितानि मोक्षसाधनानि तारतम्यवत्फलवन्ति तारतम्यवत्त्वात् संमतवत् ।

( ५७७ । २३ ) ब्रह्मादिमानुषांतानां मोक्षफलानि तारतम्यवन्ति तारतम्यवत्साधनसाध्यत्वात्संप्रतिपन्नवत् ।

( ५७८ । १ ) मुमुक्षुभिः कृच्छ्रेणैव साधनानां साधनादनुष्ठानात्कारणान्मुक्तानामिव लीलयानुष्ठानं न भवति । अनेन विशेषणप्रक्षेपादनैकान्त्यादिपरिहृतम् ।

(अनु.) 'दशकल्पं तपश्चीर्णं रुद्रेण लवणार्णवे ।
त्यक्त्वा सुखानि सर्वाणिक्लिष्टेन लवणांभसा ।

शक्रेण वर्षकोटीश्च धूमः पीतोतिदुःखतः ।
वर्षायुतं च सूर्येण तपोर्वाक्शिरसाकृतम् ।
सुदुःखेन सुखं त्यक्त्वा धर्मेणाकाशशायिता ।
पीता मरीचयो वर्षं साहस्रमतिसादरम् ।
अतिकृच्छ्रेण कुर्वन्ति यत्नं ब्रह्मविदोपिहि ।
दैवी संपद्विमोक्षाय निबंधायासुरी मता ।"

अत्र वीत्युपसर्गेण अतिशयः इति मोक्षः श्रूयते । निबंधाया-सुरी च स्थाने तमसि बंधायेति च । 'यथाधिकारावसितार्थसिद्धये' इति भागवते । मनोजवेष्वसमानावभूवुः । मनोजवः प्रज्ञातिशयः बहुवचनमाद्यर्थे । (५८० १७) ज्ञानादिगुणेष्वसमास्तारतम्योपेताः बभूवुः । "दुःखाद्यभावसाम्यं च साम्यवाक्यार्थईयते मुक्तानामपि सिद्धानां अपि—" इति तारतम्ये प्रमाणम् ।

(अनु) "इयं विसृष्टिर्यत आबभूव यदिवा दयदिवा न । अस्याध्यक्षः परमे व्योमन्सो अंगवेदयदि वानवेद ।" अस्यार्थः इयंप्रत्यक्षादिसिद्धा विविधासृष्टिः यतो हिरण्यगर्भादासमंताद्बभूव यश्चास्य प्रपंचस्य अध्यक्षो अधिपतिः सोऽपि परमात्मानं परमे व्योम्नि हृदयाकाशे ( परमात्मानं ) यदि वा दधे यदि वा न तथावेद यदि वा न । इतरापेक्षयाधिक्येन ध्यायति जानाति कात्स्र्येन तु न ध्यायति न जानाति चेति । यस्माद्वेद । कात्स्न्येन तु न ध्यायति न जानति चेति । अंगेति संबोधनम् । व्योम्नीति सप्तम्या अलुक् ।

(अनु.) " यः स्वात्ममायाविभवं स्वयंगतो
नाहं नभस्त्वांस्तमथापरेकुतः । "

अत्र कैमुत्योक्त्या ज्ञानतारतम्यमवगम्यते ।
" नाहं परायुर्ऋषयो न मरिचिमुख्या " इति शिववचनम् । ब्रह्मापि यं वेत्ति नैवेहसम्यगन्ये कुतो देवमुनींद्रमर्त्याः । अहं महेन्द्रो निर्ऋतिः " इति च ।

नत्वामतिशयिष्यंति मुक्तावपि कथंचन ।
मद्भक्तियोगाज्ज्ञानाच्च सर्वानतिशयिष्यसि " इदं भगवद्वाक्यम् ।

" उमायावदनन्तांशान्पूर्वदृष्टेभ्य एवतु ।
विशेषान्वासुदेवस्य पश्चादुक्ताविचक्षते ।
शक्रकामादयश्चैव विशेशान्ब्रह्मणि स्थितान् ।
उमादिभिः प्रबुद्धेभ्यः शतांशानेव दक्षते । "

पूर्वदृष्टेभ्यः प्रबुद्धेभ्यः इति षष्ठ्यर्थे । यत्र कुत्रचित् ( ५८० २६ ) आपादकविपर्यायस्य खल्वापाद्यविपर्ययंप्रति निर्वाहकत्वे भवेत्प्रसंगस्य विपर्ययपर्यवसानम् । नान्यथा ।

( ५८० ९ ) मुक्ता यदि तारतम्योपेतास्तदा द्वेषादिमंतः स्युरितिवदता तद्वेषादिमंतस्तस्माऽवेत्यतिवाच्यं । साम्यमप्यंगीकर्तुं शक्यते । यदि मुक्ताः समास्युः तदा द्वेषादिमंतः स्युरिति तत्राप्यनिष्टप्रसंगादित्यर्थः । भवेदेतद्यदि साम्येन प्रसक्तं द्वेषादिकं निर्दोषतया निवारयामः । नचैवं । किं नाम समसत्तामात्रं हि न द्वेषादिकारणमतिप्रसंगात् अपि तर्दि समदर्शनम् । न च मुक्तः समं मुक्तांत

अतो न द्वेषादीति । एवं तर्हि न तारतम्यसत्तामात्रं द्वेषादिकारणं किंतु स्वतोऽधिकदर्शनमेव । न च मुक्तः स्वतोधिकं मुक्तांत पश्यति । तस्मान्मत्यपि तारतम्येन द्वेषादिप्रसंगइति कुतो न संतोष्टव्यमिति परिहारो वक्तुम् शक्यते । चेतनस्य स्वतो अन्यदर्शनाभावे अरत्यादिकं प्रसज्यत इति ।

ननु बहिर्मुख एवान्य दर्शनाभावेत्यादिकं प्राप्नुवंति न च मुक्तास्तथातो नारत्यादि प्रसंग इत्यत आह ब्रह्मणोपीति । न युक्तं । दोषरहितस्यापि ब्रह्मणो ऋते एकाकिनः नारत्यादीत्यपि श्रूयमाणत्वात् ॥

( अनु ) " नैव रेमे मचैकाकी तस्मान्नरमते कश्चित् । द्वितीयमैच्छेत्तनासावितिश्रुतय ऊ दि रे ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टयमिति । ,, ब्रह्मणे दोष राहित्यस्यापिश्रुतत्वात् ।

स्यादेतत्(५८३ २ ) यद्यन्यदर्शनाभावमात्रमरत्यादेः कारणं स्यात् । नचैवं । किन्त्वन्यदर्शनेच्छायां तदभावः । मुक्तस्यान्विच्छैव नास्त्यतोन्यदर्शनाभावेपि नारत्यादिकं प्रसज्यत इत्याशंक्याह । यदिति । ( ११ ) " कामस्य यत्राप्ताः कामाः ,, अक्षण्वंतः कर्णवंतः सखायः इत्यस्मदर्थे मानम् ।

मुक्तास्तदानींतनेन परम्परंतारतम्येनोपेताः चेतनत्वात् । यथा संसारिणः । तारतम्यं च कुतश्चिद्धीनत्वं कुतश्चिदधिकत्वं

इत्येतयोरन्यतरदिति नोक्त दोषः ।

यद्वा मुक्त्युत्तरक्षणवर्ती मुक्तः प्राग्यतोधिकत्वहीनत्वाभ्यामुपेत स्वरूपोभूदिदानीमपि ताभ्यामुपेत इति प्रतिज्ञा वर्णनीयः । सामान्य एव व्याप्तिरभिव तव्येति । यद्येवमनुमीयेत् यतदा मुक्ता दुःखाद्युपेत श्चेतनत्वात् । अस्य निर्दुःखश्रुति बाधितत्वात् ।

तथा हि । श्रुतयः ' तरति शोकमात्मवित् ' ' तीर्णोहि तदा सर्वान् शोकान् हृदयस्य भवति ' ' नानानंदं किंचिदुपस्पृशति ; तद्वै दैवं मनो , येनानंदयेत्भवत्यतो , न शोचति , सर्वे नंदंति यशसागतेन , सभासाहेन , सख्यासखायः । किल्बिषस्पृत्पितुषणिर्हेषामरंहितो भवति वाजिनाय । परस्परं सखायः सर्वेमुक्ताः आगतेन स्वागतेन यशसा यशोवतासभां सहत इति समासाहः कर्मण्यण् । ( ५८४ – १४ ) तेन संख्या परमेश्वरेण निमित्तेन नंदंति कथं हि यस्मात् ईश्वरः एषां मुक्तानां किल्बिषस्पृत् दुःखं न सहते स्पर्धनेरर्थे स्पृधेति धात्वंतरं ततः क्विप् । पितुषणिरन्नस्य दाता " अन्नं वै पितुरितिश्रुतेः "षणुदाने । अस्मादिकारप्रत्ययः । अस्मत्यर्थे । वादिना येंद्रियायहितो भवति इंद्रियंवैवाजिनमिति श्रुतेः । इहमुक्तविषये । यं यमित्यनेन यं यमंतमभिकामो भवति सोस्य संकल्पादेव भवतीति । अंतःस्थानं मुक्ता दुःखाद्युपेता इति प्रतिज्ञायाः स्ववचनाहतत्वाच्चेत्यपि द्रष्टव्यं ।

[ ५८५—२३ ] वीगोध्यवसितांतगामि । इन्द्रः परमे-

श्वरः । उग्रमुग्रं सर्वान्दुष्टप्रकृतीन् दमयन्नित्य नरकं प्रापयन् अन्यमन्यं सर्वान्सत्स्वभावानतिनेनीयमानः संसारं भृशमतिक्रामयन् । स्वयोग्यतिक्रमणैवएधमानं द्वेष्टीत्येधमानद्विट् । शृण्वे श्रूयते । कुतः उभयस्य देवतासुरवर्गस्य राजा यतः ।

किंच मानुष्याणिशः प्रजांश्चोष्कूयते नित्यंपरिवर्तयति । परापूर्वेषां । अत्र तमन्त्रे पूर्वेषां पूर्वनिर्दिष्टानामुग्राणां सख्या सख्यानि परावृणक्ति परित्यजति । अपरेभिरपरैः सादुभिः सह सख्यानि विततुराणोऽअतिशयेनत्वरमाण एति । [ ५८६ १ ] अनानुभूतीः सम्यगनुभवरहितानवधून्वानोवमे संसारे वर्तयन्निद्रः पूर्वीः शरदोऽतीतान्संवत्सरांस्तीर्णःवर्तमानांश्च तर्तरीति । आगामिनश्च तरिष्यतीति । अत्र जीवानां त्रैविध्यं श्रूयते ।

वर्षणात् वृषभः परमेश्वरो दिवे दिवे सर्वदा सदृशीश्चितनत्वमात्रेण कृष्णास्तमोमयोधीर्जाः प्रजाः कस्तादेवेभ्योन्यमर्धं स्वीयात्सद्मनो पासेधत् निवर्तयति ।

[ अनु ] अहं दासा वृषभो वस्नयंतोदव्रजे वर्चिनं शंबरंच शरदस्तर्तरीति श्रुत्यर्थः वर्षण वृषभः [ ५९३ ३ ] परमेश्वरो दिवे दिवे सर्वदा सदृशीश्चितनत्वमात्रेण कृष्णास्तमोमयीर्जाः प्रजाः कास्तादेवेभ्योऽन्यमर्धं स्वीयात्मद्मनोपासेधात् ।

किंच दासौ दस्युवस्नयंता जगदाच्छादयंतौ वर्चिनं शंबरं चोदव्रजे जलराशौ समुद्रतीरे अहन् हिंसितवानिति । अनेन

दैत्यानां मोक्षाभावोऽभिधीयते । सर्वदेति नियमः । तं भूतिरिति देवा उपासां चक्रिरे । भूतिरैश्वर्यरूपः । बभूवुर्मुक्ता इति शेषः । एतर्हीदानीं सुप्तः सुप्तस्थो वायुः । पराबभूवुः नित्यनिरयं प्राप्ताः । अत्र देवासुराणां सम्यग्विपरीतोपासनाभ्यां मोक्षतमसोः प्राप्तिः श्रूयते । तेन देवत्वमसुरत्वं च सहजमिति ज्ञायते ।

(अनु.) तद्यथा पेशस्कारी सुवर्णकारः पेशसो मात्रामंशं मुपादायान्यन्नवतरं कल्याणतरम् रूपम् तनुते । एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं रूपं कुरुते । पित्र्यं वा गांधर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मंवाऽन्येषां भूतानां । तद्यथा तद्ब्रक्षमाणं निदर्शनं ।

यथा [ २८६ ८ ] पेशस्कारी सुवर्णकारः पेशसः सुवर्णस्य मात्रामंशं । अन्यदिव नवतरं प्रागनुभवात्कल्याणतरं मलापकर्षात् । रूपं रुचकादिकं । आत्मा परमात्मा । अन्येषां भूतानां मनुष्योत्तमानां । यथा सुवर्णस्यैव रुचकादिभावः तथा मुक्तियोग्यानामेवेश्वरेण मुक्तत्वं क्रियते नान्यापामिति प्रतीयते । पुरा सत्येयुग इत्यनेन मोक्षादिफल प्राप्तिमुक्ता यानप्राप्येत्यसुराणां न तां गतिमिति मनुष्याणां च कदापि तत्प्राप्तिर्नास्तीत्युच्यते । न गतिं प्रपद्यंते विना भागवतान्नरान् ।

[ अनु ] यान प्राप्यासुरैः सर्वैरक्षय्याक्लेशवर्जिता । राक्षसीमासुरीं चैव प्रकृतीं मोहिनीं श्रिताः । मोघाशा मोघकर्माणो मोघज्ञानाविचेतसः । प्रकृतिः स्वभावः । अतो योग्यता

नादितःसिद्धा। अन्यथा सर्वादृष्टानां फलानां चाकस्मिकत्वप्रसंगात्। अदृष्टादेव च अदृष्टं स्वीकृतंसर्ववादिभिः । ( ५८७ । १९ ) चार्वाकव्यतिकमृते तत्तत्फलप्राप्त्युपाययोः प्रयत्नादृष्टयोरागन्तुकयोः बीजभूतो नागन्तुकः स्वभावविशेष एवानादियोग्यतोच्यते । यथोक्त स्वभावाख्यो योग्यतया हठाख्येत्यादि ।

( ५९० । २६ ) द्विविधो हि संशयो भवति । एकस्तावदादित एव । यथा स्थाणुर्वायं पुरुषो वेति । अपरस्तु निश्चयपृष्टभावी यथा स्थाणुतयाऽयं प्रतीयते स्थाणुर्भवति न वेति । ( ५९१ । १ ) तत्राद्यो विशेषादर्शनादिदोषमूलः । द्वितीयोऽपि प्रथमज्ञानस्य दोषजन्यत्वशङ्कामूलः । दोषाश्च मानस एव दर्शने संभवन्ति । अतस्तत्संशयात्मकं वा जायते निश्चयतया ज्ञानस्य विषये वाह्यार्थे संशयो भवति। न तु साक्षिसिद्धदर्शने दोषसंभवः। अतो न तत्संशयात्मकं नापि तत्सिद्धेर्थे संशय इति ।

प्रत्यक्षागमज्ञानप्रामाण्यग्रहण एव परीक्षोपयोगः । धर्मिज्ञानानुमानोपमानानुव्यवसायानां तु प्रामाण्यग्रहणं न परीक्षापेक्षमिति कश्चिन्मन्यन्ते ।

विमतं ज्ञानं न स्वप्रकाशमनात्मत्वात्कार्यत्वात्, अनित्यत्वात् मनोरूपत्वात् सुखादिवदित्यादि प्रमाणविरोधाच्च । भवतु वा ज्ञानं स्वप्रकाशं तथापि स्वरूपमात्र एव न तु स्वधर्मे प्रामाण्येऽपि। तथाहि वेदवाक्यश्रवणे सति बाह्यस्य वाक्यार्थज्ञानमुत्पद्यते न वा। न द्वितीयः । सत्यां सामग्र्यां कार्यानुदयानुपपत्तेः । अन्यथ

मीमांसकस्यापि तदनुदयप्रसंगात्। आद्येऽपि ज्ञानं प्रकाशते न वा। नेति पक्षेऽपसिद्धान्तः। प्रथमेऽपि तत्प्रामाण्यं प्रकाशते न वा। नाद्यः तन्निरासानुपपत्तेः। (५९२।१) ततो ज्ञान-दृष्टिमात्रेण न ज्ञानप्रामाण्यं दृश्यत इति द्वितीय एवांगीकार्यः। तथाच स्वप्रकाशज्ञानेनैव प्रामाण्यग्रहः इति कथं स्यात्। तथात्वे वा अपौरुषेयत्वादियुक्तिभिः प्रबोधितो ब्राह्मः प्रतिपद्यते च तत्प्रा-माण्यमिति कथं न परीक्षापेक्षत्वम्। अन्यथा वैदिकज्ञानप्रामाण्ये विप्रतिपत्तिरेव न स्यात्। ज्ञानस्वरूपवत्।

किं चैवं वादिनो मते शुक्तिरजतादिविभ्रमो न स्यात्। इदमनुभवस्य रजतस्मरणस्य च भेदाग्रहो हि विभ्रमः। तत्र प्रामाण्यवद्भेदस्यानुभवत्वस्मरणत्वयोश्च प्रकाशोऽवश्यं भावीति कथं विभ्रमावकाशः। न हि प्रामाण्यस्य भेदादेश्च कश्चिद्विशेषोऽस्ति इति।

ज्ञानप्रामाण्ये सहैवानुमेये इत्यप्यसत्। ज्ञानस्यानुमेयत्वे प्रमाणाभावात्। ज्ञानव्यवहारस्य साक्षिसिद्धत्वेनापि उपपत्तेः। आशुतरविनाशिनो ज्ञानस्य जानामीति वर्तमानतया प्रतिभासानुप-पत्तेश्च। अपरोक्षावभासविरोधाच्च। अनुमेयत्वेपि ज्ञानस्य न ज्ञातानुमितिमात्रेण प्रामाण्यं तस्य दृश्यते। तद्धि ज्ञाततया व्यवहारेण कार्येण वाऽनुमातव्यम्। न च तावता प्रामाण्यमनु-मातुं शक्यते। व्यभिचारात्। ततो ज्ञाततादिमात्रेण प्रतीते ज्ञाने बाधाभावादिना प्रामाण्यमनुमेयम्। अन्यथा बाह्यानामपि

वैदिकज्ञानप्रामाण्यानुमानप्रसक्तेः । प्रसक्तमप्यपोह्यत इति चेत् ! तर्ह्यपवादनिरासाय परीक्षापेक्षावश्यं भाविनीन्यागतम् ।

इदमेव चास्माभिरभिधास्यते सर्वथा परीक्षानपेक्षेति तु न क्षम्यते । एतेन स्वाक्षिवेद्यतापक्षोऽपि प्रतिक्षिप्तः । औपनिषद्-ज्ञानदृष्टिमात्रेण बाह्यैस्तत्प्रमाणस्यादर्शनात् । अनुमानादिज्ञानदृष्टि-मात्रेण तत्प्रामाण्यज्ञानं न परीक्षोपेक्षमिति वदत्तावन्मन्दं अनुमा–नादिज्ञानदृष्टिमात्रेण तत्प्रामाण्यस्य चार्वाकादिभिरदृष्टत्वात् । विभागे मानाभावाच्च । धर्मिज्ञानादिप्रामाण्येऽविगानाभावादिति चेन्न निरालम्बनादिमतदर्शनात् । उपपत्तिबाधितं तदिति चेत् । तर्हि स्वीकृतायुस्मतैव परीक्षापेक्षेत्यलं पल्लवेनेति । यत्र प्रामाण्ये संशय-स्तत्र परीक्षा । न तु नियमेन सर्वत्रेति सिद्धान्तः ।

केचित्तु परीक्षैव नांगीक्रियते । किंतु ज्ञानस्वरूपं तत्प्रा-माण्यं च तेनैव वा साक्षिणा निरपेक्षं वा सर्वत्र गृह्यत इत्युच्यते तन्मतमेवापाकृतम् नन्वभितो । (५९३ । ४) यदि साक्षी दोषाभावे प्रमाणमेतदिति प्रथमं संमुग्धं प्रामाण्यं गृहीत्वा पश्चाज्जिज्ञासायां सत्यां परीक्षया प्रमाणमेवेत्यवधारयतीत्येषा प्रक्रिया यदि नांगीक्रियेत तदानभ्यस्तविषयाणां शब्दादिना जातानां सर्वेषामपि ज्ञानानां प्रथममेव प्रामाण्यमवधार्येत । न चैतदस्ति । तेन जानीमो अस्तीयं प्रक्रियेति ।

(५९४ । १९) प्रत्यक्षं भगवद्रूपाणां दोषित्वे प्रमाण–मिति वदन् प्रष्टव्यः । केचित्तत्कालवर्तिनः पुरुषाः भगवद्रूपेषु

दोषान्स्पश्यन्तीत्यत्रार्थेऽस्माकं किं प्रमाणम् । प्रत्यक्षमनुमानमागमो वा । नाद्यः परपुरुषवर्तिनि प्रत्यक्षे परेषां प्रत्यक्षायोग्यात् । दूरे कालभेदे । नाप्यनुमानम् लिंगाभावात् । आगमोऽपि वेदः पुराणादिर्वा । नाद्यः । तस्य दर्शनात् । द्वितीये तत्पुराणवाक्यं तद्दोषदर्शनं किं प्रत्यक्षलक्षणं प्रमाणतया मन्यते, उतापरीक्षित प्रामाणाप्रामाणभावप्रतीतिमात्रतया, अथाप्रमाणतया । अत्र दोषमाह । तदिति । भगवद्रूपेषु दोषग्राहिणीं प्रतीतिं प्रमाणतया प्रतिपादयत्पुराणवाक्यं दोषसद्भावं मन्यत एव । ततश्च श्रुतिविरोधे न प्रमाणं स्यात् । श्रुतिरेव खलु पुराणस्योपजीव्यम् । अन्यथा मूले प्रमाणाभावात् उत्प्रेक्षामूलत्वे प्रतारकवाक्यवदप्रामाण्यप्रसंगात् ।

न च ईश्वरादिप्रत्यक्षमूलत्वं तथात्वे निश्चितप्रामाण्ये श्रुति-पुराणवाक्ययोः विरोधे वस्तुविकल्पप्रसंगात् । वेदविरुद्धस्याप्रामाण्ये वक्तव्यं प्रत्यक्षमूलत्वं च त्याज्यम् । ततश्चोपजीव्यवेदविरोधात्पुराणवाक्यं न प्रमाणमेव ।

न द्वितीयः । अपरीक्षितदर्शनस्य प्रामाण्यासंभवात् ।

न तृतीयः । अस्मदभिमतसिद्धेः ।

( ५९।१ । १७ ) उपजीव्यवेदविरोधादुपजीवकयोः प्रत्यक्षपुराणवाक्ययोरप्रामाण्यमित्युक्तम् । तदसत् । उपजीवक-मुपजीव्यविरोधेन बाध्यत इति नियमाभावात् । दृश्यते हि उपजीव्यस्यापीदं रजतमिति ज्ञानस्योपजीवकेन नेदं रजतम् इति ज्ञानेन बाधः इति चेत् । अस्त्येवेदं रजतमिति ज्ञानयोरुप-

थिव्योपजीवकभावः ।

अयं खल्वस्य नियमस्यार्थः । उपजीव्यस्योपजीवकेन बाधश्च । तथाप्युपजीव्यविरोधेनोपजीवकं बाध्यत इति नियमभंगो नास्ति । परीक्षया शोधितमुपजीव्यं विरोधि उपजीवकं बाधते स्वयं तेन न बाध्यत इति । न तु यथाश्रुतः ।

( ५९६ । २ ) अस्य तु तदा भंगः स्यात् । न चैवं इदं रजतमिति ज्ञानं तु न शोधितम् । ततस्तस्मिन्नुपजीवकेन बाधितेन नियमभंगः । न हि निर्विशेषणस्य व्यभिचारे विशिष्टं व्यभिचरति अतिप्रसंगात् ! न च वाच्यम् विशिष्टस्य प्रयोजकताकल्पनं निर्मूलमिति । उभयथा बाध्यबाधकभावदर्शनात् । विशेषणानपेक्षायमव्यवस्थापातात् ।

ननु परीक्षायामंगीकृतायां तयैवालं । परीक्षितेनापरीक्षितं बाध्यत इत्येतावतः क्वचिद्व्यभिचाराभावात् किमुपजीव्योपजीवकभावेन उच्यते । भवेदेवं यद्यात्यंतिकीं परीक्षामालांगीकुर्मः । न चैवम् । किन्तु यावच्छक्ति परीक्षामेव । न च तावन्मात्रस्य बाधकत्वनियमोऽस्ति । यावच्छक्तिपरीक्षितस्यापि बाधदर्शनात् । अतो युक्तं विशिष्टस्योपादानम् ।

आत्यंतिकपरीक्षैव बाधकत्वोपयोगिनी भवतु किमुपजीव्यत्वेनेत्यपि न वाच्यम् । तस्यापि मांद्यापहारिकत्वात् ।

अस्य बाधकत्वव्यवहारः तत्सुपरीक्षितमेवेति चेन्न । अपरीक्षितस्यापि उपजीव्यस्य बाधत्वदर्शनात् । तत्र उपजीवकं न शोधितमिति चेत् । तर्हि शोधितेन उपजीवकेन अशोधितस्य उपजीव्यस्य बाधः इति उक्तं स्यात् ।

तदेव अस्माभिरपि अभिहितम् । द्वयोरपि शोधितत्वेऽपि न उपजीव्यस्य बाधः तथा दर्शनात् । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति दर्शनात् । प्रकृते तु वेदः परीक्षितउपजीव्यस्यश्चेति ।

अत्र रजतसद्भानस्य उपजीव्यत्व रजतप्रतिरूपत्वात् वा सिद्धेर्धर्मिणि प्रतिषेधासंबन्धाद्वा धर्मिज्ञानस्याद्यस्योपजीव्यत्वमिति कल्पः ।

आद्यपक्षस्तु दूषितः ।

द्वितीये परिहारः । यद्यपि एकमेवेदं रजतं ज्ञानम् । तथापि विषयोपाधिवशात् विभागम् । तत्र प्रकारे भ्रमत्वेऽपि स्वरूपे अभ्रम एव । तत्र कदापि बाधाभावात् ।

( ५९६ । १० ) तथा अन्येऽप्याहुः, सर्वं ज्ञानं धर्मिणि प्रमाणम् । प्रकारे तु विपर्ययः इति । तस्मादभ्रमभागमात्रम् । तेनैव धर्मिणः सिद्धेः । रजताकारस्य निषेध्यत्वेन धर्मित्वाभावादिति हि शब्दार्थः । अस्मिन्पक्षे यदुपजीव्यं न तदुपजीवकेन बाध्यते यच्च बाध्यते न तदुपजीव्यमित्यतो नेदमस्मदीयनियम–

भंगस्योदाहरणमिति ।

( ५९६ । १३ ) अत्र मायावादिनो वदन्ति । यदुक्तमुपजीव्यविरोधादद्वैतश्रुतीनामप्रामाण्यमिति । तदसत् । तत्राप्यस्य समाधानस्य सुवचत्वात् ।

तथाहि । यः सर्वज्ञ इत्यादीनां तत्त्वमस्यादीनां च कथं उपजीव्योपजीवकभावः इति वक्तव्यम् । सिद्धं तु निवर्तकत्वादित्यादिवचनात् । तत्त्वमस्यादिवाक्यमैक्यविरोधिनां सार्वज्ञादीनां दुःखादीनां च प्रतिषेधकमंगीकृतम् ।

न च प्राप्तिं विना प्रतिषेधोऽस्तीति प्राप्तिरूपं यः सर्वज्ञः इत्यादिकं उपजीव्यं तत्त्वमस्यादिकंतूपजीवकमिति वा । असिद्धे धर्मिणि प्रतिषेधानुपपत्तेः धर्मिप्रतिपादकमाद्यमुपजीव्यं, उपजीवकं च उत्तरमिति वा । आद्ये रजतज्ञानस्यैवापरीक्षितत्वादुपजीव्यस्यापि प्रथमस्य उत्तरेण बाधे न काप्यनुपपत्तिः । द्वितीये शुक्तिस्वरूपमात्रमिव ब्रह्मस्वरूपमात्रं उपजीव्यं न सार्वज्ञादिविशिष्टम् । तथाच यदुपजीव्यं न तदुपजीव्यमिति न कश्चिद्विरोधः इति ।

अत्रेदं वक्तव्यम् । इदं रजतमिति ज्ञानमुपजीव्यमप्यपरीक्षितत्वात् उपजीवकेन नेदं रजतमिति ज्ञानेन बाध्यते । नात्र तथा । यः सर्वज्ञः इत्यादीनामहं दुःखीत्यादीनां च सुपरीक्षितत्वात् । उपपादितं खलु यः सर्वज्ञः इत्यादिश्रुतीनां तत्त्वावेदकत्वं

साक्षिणश्च नियमेनाव्यभिचारित्वमिति ।

( ५९७ । १ ) द्वितीयपक्षेऽपि, यथा नेदं रजतमिति ज्ञानं पुरोवर्तिनः स्वरूपमात्रं धर्मीकृत्य प्रवर्तते न तु रजतत्व-विशिष्टं न तथा तत्त्वमस्यादिवाक्यं प्रवर्तितुमर्हति । किन्तु सर्वज्ञत्वादिविशिष्टं ब्रह्मस्वरूपं दुःखादिविशिष्टं जीवस्वरूपं च धर्मीकृत्यैव । तथाच धर्मिग्राहकविरोधोऽपरिहार्यः इति । ननु तत्त्वमस्यादिवाक्यमपि यदि स्वरूपमात्रमुपजीव्य प्रवर्तेत तदा कीदृशो दोषः इत्यत आह । कथमिति । शब्देनानूद्य हि स्वरूपं तत्त्वमसीति वक्तव्यम् । न च निर्धर्मकस्य प्रतिपादकः शब्दोऽस्ति । अतः स्वरूपमात्रस्य बुद्ध्यनारोहात् बोधनमेवानुपपन्नमिति । न ब्रूमः स्वरूपमात्रस्योपजीव्यत्वम् । किन्तु भेदकसर्वज्ञ-त्वादि धर्मान्विहाय तत्त्वादिना विशिष्टस्य । यदि तत्त्वादि धर्मोपेतस्योपजीव्यत्वं तर्हि सार्वज्ञ्यादिकं विहाय यस्मात्कस्माचिन् तत्त्वादेः तद्ब्रह्मेति कथं ज्ञेयम् । यद्यप्यभिन्नपक्षे नोक्तदोषस्तथापि वाच्यस्य ब्रह्मास्मीति ज्ञानमनुपपन्नमेव । तस्य यावता धर्मेण व्यावृत्तं भवेत् तावतोपेतस्यैवोपजीव्यत्वम् ।

( ५९८ । १२ ) ननु यत्सर्वज्ञं तत्त्वमसीति न बोधनीयम् । किन्तु त्वमसीत्येव । न चोक्तदोषः । तच्छब्दो हि ब्रह्मवदिति । योग्यान्विताभिधायिनश्च शब्दाः । ततो लक्षणं च ब्रह्मणान्वेतुं योग्यम् ।

ततश्च तच्छब्देन व्यावृत्तस्य प्रतीतिरीति चेत् । स्वरूप-

भूतलक्षणेन व्यावृत्तत्वं मतं चास्माकं अंगीकृत्यैवेदमुदितम् । किंच अस्मिन्नपि पक्षे ब्रह्मणो बुद्ध्यवनारोहस्तदवस्थ एव । यत तदादिशब्दाः सामान्यत एव योग्यान्वितं ब्रुवते । सर्वज्ञादिशब्दा एव विशेषतः । तथानुभवात् ।

न च सामान्यतोन्विताभिधायिना व्यावृत्तप्रतीतिरिति । यतः शब्दाः अखिल योग्यन्वितं स्वरूपं विशेषतः सामान्यतयाच शब्दबोध्यं भवेत् । अन्विताभिधानमात्रमंगीक्रियत एव । तच्च एकस्य पदस्य सामान्यतएव न विशेषत इति न बुद्धौ ब्रह्मां रोहः । यदि च विशेषतस्तदा धर्मिग्राहि विरोधस्तदवस्थएवेति समुदायार्थः ।

केचिन्मायावादिनोऽन्विताभिधानमंगीकुर्वते ' विज्ञान—घनादय ,, इति नाप्रासशंकेयम् ।

( ५९७ २३ ) व्यावर्तकधर्मैर्व्यावृत्तस्यैवोपजीव्यत्वमिति यदुक्तं तन्नास्ति । बाधकज्ञानेषु तदभावात् । न च तत्रापिव्यावृत्तस्यैवोपजीव्यत्वं नस्वरूपमात्रस्येत्युक्तमिति वाच्यं । पूर्वास्मिन्भ्रमज्ञाने व्यावृत्तस्यासिद्धत्वात् । सिद्धौ वा भ्रमानुपपत्तेः देवदत्तादौ यश्चैत्रादिभ्रमस्तत्र पुरोवर्तित्वपूर्वाणि विशेषणानि देवदत्तादि स्वरूपं देवदत्तत्वादेरविदितत्वाचैत्रमात्रादिनैवा पुरोवर्त्यादिभ्यां व्यावर्तयंति । नापि भ्रमानुपपत्तिः । आरोप्यव्यावृत्तेरनंगीकारणात् [ ५९८ ३ ] ननु अनेन नात्यंतव्यावृत्तिर-

पजीव्यत्वोपयोगिनी । किंतु व्यावृत्तिमात्रमित्युक्तं भवति । तत्प्रकृतेऽप्यस्ति, तत्त्वादिना ब्रह्मणोऽपि व्यावृत्तत्वेनोपजीव्यत्व-संभवादिति चेन्न। तावन्मात्रेण बोध्यस्य ब्रह्मास्मीति ज्ञानानुपपत्ते-रुक्तत्वात् । ब्रह्मणो निर्विशेषत्वात् व्यावर्तयति ।

किं पुनः । किं कर्तृब्रह्मव्यावर्तयति न किमपि । तत्वादिनामंगीकारेपि दोषमाह । तत्वादिना विशेषणेन यस्मा-त्कस्माचिद्प्यर्थात्ततत्वादिरहिताद्व्यावृत्तं चेदुपजीव्यत्वमसीति बोध्यते ।तद्विज्ञातज्ञापकं वाक्यं स्यात् तत्वमित्यस्य तद्भावयुक्त-स्त्वमित्यर्थावगमात् । नहि निःस्वभावं किञ्चिदस्तिचिन्म त्रत्वं व्यावर्तकम् ।

तच्च स्वरूपमेवेति न निर्विशेषत्वभंगः इति चेत् । सर्वज्ञ-त्वादिकमपि तथाप्यश्रुतत्वात् अभिन्नत्वाच्च । श्रुतत्वसाम्येपि चिन्मात्रत्वमेव धर्मिणि निवेशते । अविरुद्धत्वात् । न सर्वज्ञ-त्वादिकं विरुद्धत्वात् । यथा नेदं रजतमितिज्ञानविरुद्धपुरोवर्ति-त्वाद्युपेतस्य धर्मत्वम् । न विरुद्धरजतत्वाद्युपेतस्य । इति चेन्न । सिद्धसाधनत्वप्रसंगात् । रोद्धव्यस्यापि उचितत्वात्, स्वाभेदांगी-काराच्च । ततः संज्ञातज्ञापकस्य न शास्त्रत्वम् । चिन्मात्रं तद-तिरिक्तं चास्तीति वाक्यार्थः इति चेन्न । तथावाक्यार्थस्फुरणात् । ननु सर्वज्ञत्वं न धर्मिणि निवेशयितुं युक्तम् । तस्य सर्वापेक्षत्वात् । सर्वस्य च नेहनानास्तीत्यादिभिः मिथ्यात्वावगमात् ।

(५९८ । २२) नहि तथाभूतस्य सत्यस्वरूपता संभवति । चिदानंदादेस्तु ब्रह्मस्वरूपत्वे न काप्यनुपपत्तिरित्याशयवानः शंकते । चेतनत्वं नाम ज्ञत्वम् । तच्च ज्ञानक्रियां प्रतिकर्तृत्वम् खलु ज्ञत्वम् । सकर्मकक्रियावचनश्च जानातिः ।

( ५९९ । १ ) ततश्च ज्ञस्य ब्रह्मणो ज्ञेयं स्वयमेव वा स्यात्परं वा । नाद्यः एकस्य कर्तृकर्मभावविरोधेन अनंगीकारात् । विशेषानंगीकाराच्च । न द्वितीयः । परस्य मिथ्यात्वात् । तदपेक्षस्य चेतनत्वस्य च मिथ्यात्वात् । एवं ज्ञत्वस्य ज्ञानसापेक्षत्वात् । तच्च ज्ञानं स्वरूपं अतिरिक्तं वेति विकल्प्य दूषणीयम् ।

किंचेवं वदता स्वरूपमात्रमुपजीव्यमित्यपि वक्तुं न शक्यते तस्यापि स्वशब्देन परापेक्षताप्रतीतेः । स्वं च तद्रूपं चेति हि स्वरूपम् । रूपशब्दश्च स्वपरसाधारणः । तेन स्वस्मिन्प्राप्तेप्युच्यमानः स्वशब्दः परिसंख्यान्यायेन परव्यावृत्तिमेव प्रतिपादयतीति ज्ञायते । यथा अस्मदभिप्रेतं व्याख्यानं न चेदंगीक्रियते तदा स्वरूपं नाम किं न किमपि स्वरूपशब्दो – निरर्थकः स्यादित्यर्थः ।

रूपशब्दसमानार्थः स्वरूपशब्दः इति चेत् । तर्हि स्वरूपशब्दवैयर्थ्यम् । तत्र स्वरूपशब्दः सामान्याकारस्याभिधायकः । स्वरूपशब्दश्चासाधारणाकारस्य । तस्मात्तत्प्रतीतेः ।

( ५९९ । १८ ) यदुक्तं 'चेतनत्वं ब्रह्मणो न स्यात्'

इति । तदिष्टापादनम् । नहि वयं ब्रह्मणश्चेतनत्वमंगीकुर्मः क्रियाविशेषलक्षणस्य कर्तृत्वस्य निर्विकल्पकेऽभावात् । किन्तु चैतन्यमेव ब्रह्म । चेतनशब्दोपि तदर्थ एव इति । मैवम् । चैतन्यं हि चेतनशब्दप्रवृत्तिनिमित्तम् । तच्च ज्ञानमेव । चिती संज्ञाने इति धातोः । ततश्च ज्ञानं ब्रह्मेत्युक्तं भवति । ततोऽपि बहुतरणापेक्षत्वमायातम् । ज्ञानं हि ज्ञातृज्ञेयकरणसापेक्षं भवति । ज्ञानत्वादिधर्मश्चानिवार्याः । न च सविशेषं ब्रह्म परेणांगीक्रियते ज्ञेयादिकं च न स्वयम् इति युज्यते, विरोधात् । परंतु मिथ्ये-तितरथं तत्सापेक्षं ज्ञानं कथं सत्स्यात् । विमतं ज्ञानं ज्ञेयादिसापे-क्षम् । ज्ञातत्वात् संप्रतिपन्नवत् । न च ज्ञानत्वं असिद्धं अंगी-कारविरोधात् । ब्रह्मज्ञानं ज्ञेयाद्युपेतं; ज्ञत्वात्; संप्रतिपन्नवत् ।

ननु प्रसिद्धस्य ज्ञानस्य ज्ञेयाद्युपेतत्वेऽपीदं ब्रह्मस्वरूपं ज्ञानं तद्रहितं भवतु किं बाधकं इति चेत् । न । यदि धात्वर्थोऽपि ज्ञानं यदि कर्तृरहितं स्यात् । यद्यपक्षावधात्वर्थोपि ज्ञानं यदि कर्तृरहितं स्यात् आकांक्षावशात्सकर्मकतया प्रतीयमानमपि च निष्कर्मकं स्यात्को बहुतरोतिप्रसंगः । एवं तर्हि भोक्तृभोग्य-विहीनं भोजनं स्यात् । ताडयितृताडनाभ्यां हीनं ताडनं स्यात् इत्याद्यतिप्रसंगः ।

ननु कार्यमेव कारकमपेक्षते । न च कार्यं अकार्यस्य कारकानन्वितत्वे ऽकार्यावेदवाक् वाच्यवक्तृहीना स्यात् । कार्यस्य च कारकान्वितत्वे कर्माद्यन्वितत्वानियमोपि स्यात् ।

आकांक्षानिमित्तं प्रतिसंबंध्यन्वितत्वं नित्यत्वेन न हीयत इत्येतावन्मात्रेण वागुदाहरणस्य गृहीतत्वान्न दोषः । वागित्युक्ते (६०० । २०) हि किं वक्तृता किं वाच्येत्याकांक्षा भवत्येव । एवं ज्ञानं इत्युक्ते ज्ञातृज्ञेयाकांक्षा अस्त्येव । अतो नित्यत्वं अप्रयोजकम् ।

प्रपंचमिथ्यात्वे किं प्रमाणम् । न तावत्प्रत्यक्षेण । तस्य सत्यताग्राहित्वात् । नाप्यनुमानेन । प्रत्यक्षबाधितस्य तस्य प्रामाण्याभावात् । नाचागमेन । प्रपंचमिथ्यात्वं प्रतिपादयतस्तस्याभावादित्याक्षेपार्थः । सर्वमिथ्यात्वस्य च पक्षांतर्भूतत्वे वाक्यवाक्यार्थयोः मिथ्यात्वापातात् । तथाच प्रपंचस्य मिथ्यात्वं न संभवति, प्रमाणाभावात् । व्याघाताच्च पक्षांतर्भावप्राप्तत्वं स्यात् । तन्न्यायेन वियदादेः सत्यत्वं च स्यात् । तथाच उपपत्तिविरुद्धत्वात् न प्रतीतार्थे तात्पर्यं आगमस्य ।

उपक्रमादिभ्यः उदपत्तिरेव बलीयसी । बलीयो हि उत्तरोत्तरम् इति वचनात् ।

प्रत्यक्षादिविरुद्धत्वाच्च मिथ्यात्वानुमानं कालात्ययापदिष्टम् । अतः सार्वज्ञाद्युपेतमेव ब्रह्म धर्मी । इति भावः ।

(६०२ । ३) यथा यः पुरुषः सः स्थाणुरित्यत्रारोपितेन पुरुषत्वेन व्यावृत्तं वस्तु धर्मीकृत्य प्रवृत्तावपि नोपजीव्यविरोधः इति चेत् न । सर्वशब्देन प्रकृतं गुणजातमुच्यते । कथंचनेति

मानाभावात् श्रुत्यादिप्रमाणविरुद्धत्वाच्च ।

( ६०२ । १६ ) **यदि** ब्रह्माद्या मुक्तौ तारतम्यवन्तो न स्युस्तदा ज्ञानमात्रेण मोक्षस्य प्राप्तप्रायत्वात्, ज्ञानोत्तरकालं शुभं न कुर्युः । अशुभं च न परित्यजेयुरित्यर्थः । कुर्वन्ति च त्यजन्ति च । ततस्तारतम्यवन्तः ।

(६०३ । ८ ) **किंच** अनेन सयआत्मानमेव लोक-मुपास्ते न ह्यस्य कर्मक्षीयते अस्माध्द्येवात्मनो यद्यत्कामयते तत्तत्सृजते । अविद्वानित्यनेन यद्यप्यनेवं विन्महत्पुण्यं कर्म करोति तद्वास्यांततः क्षीयत एवेति श्रुतिमुपादत्ते । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति श्रुतिमुपादत्ते । विद्यया ब्रह्मसाक्षात्कारपूर्वक उपनिषदा योग्यया वीर्यवत्तरं अधिकफलम् इत्यादि वाक्यसामर्थ्यात् ज्ञानि कृतकर्मणां फलवत्त्वं नावत्प्रतीयते । ततस्तेषां वैचित्र्याद्विमुक्तिगं तारतम्यं च सिद्ध-मित्यर्थः ।

नन्वत्र उपासककर्मणां अक्षयफलत्वमुच्यते । इतरत्र च ज्ञानविद्याशब्दयोः परोक्षज्ञानार्थत्वस्याप्युपपत्तेः इति चेत् । अत्र पृच्छामः, किं उपासककर्तृकर्माणि अक्षयं मोक्षं कुर्वन्तीति उत स्वर्गादिकम् । नाद्यः, नान्यः पंथा इत्यादिश्रुतिविरोधात् । न द्वितीयः । पुण्यजितो लोकः क्षीयत इति स्वर्गादिफलानां क्षयित्वश्रवणात् । अनेवविन्महत्पुण्यं कर्म करोति, तदेव वीर्यवत्तरं भवतीत्युदाहृतश्रुतिविरोधश्च ।

( ६०३ । २० ) पक्षद्वयेऽपि । तदेवं अज्ञपक्षे वाक्यार्थानुपपत्ते-रुपासकपदस्य ज्ञान्युगलक्षणत्वमेव युक्तम् । कर्मणां ज्ञानद्वारा अक्षयमोक्षसाधनत्वात् तानि तथा उच्यन्ते इति चेत् । न । विरोधाभावात् । तारतम्यसाधकत्वाच्च । कर्माणि हि जिज्ञासवो विचित्राणि कुर्वन्ति । ( ६०४ । १ ) तैश्च जायमानेन ज्ञानेन विचित्रेणैव भाव्यम् । अन्यथा कृतविप्रणाशाकृताभ्यागमापत्तेः । विचित्रेण च ज्ञानेन विचित्र एव मोक्षो भावनीयः । पूर्वोक्तादेव हेतोरिति । एवमपि ज्ञानोत्तरकर्मणां सफलत्वात्; फलस्य चान्यस्य असंभवात् ; परिशेषात् मुक्तवानंदवृद्धिरेव फलं सिध्यति । तथाहि । ज्ञानिकृतेषु कर्मस्वेता विधास्तावत्संभवन्ति । ज्ञानार्थत्वं वा, भोगार्थत्वं वा, व्यर्थत्वं वा, मुक्तावानंदवृद्ध्यर्थत्वं वा इति । तत्र आद्यः पक्षो न घटते । पूर्वकृतशुभैरेव ज्ञानस्योत्पन्नत्वात् । तेषां तत्फलत्वात् । अन्यथा ज्ञानात्पूर्वभाविकर्मणां वैयर्थ्यप्रसंगात् । पूर्वजातं प्रति पश्चाद्भाविनः कारणत्वायोगाच्च । ( ६०४ । ११ ) नापि भोगार्थत्वं प्राचीनप्रारब्धकर्मभिरेव भोगस्य जायमानत्वात् । अन्यथा तेषां वैयर्थ्यापत्तेः । नापि तृतीयः । अनुष्ठानासंभवात् । नहि प्रेक्षावन्तो व्यर्थं कुर्वन्ति । कर्म । करणस्वाभाव्यादिति चेत् । अबुद्धिपूर्वताप्रसंगात् । लोकसंग्रहार्थं इति चेन्न । तत्प्रयोजनस्यापि वाच्यत्वात् । ईश्वरवदिति चेन्न । मुक्तावपि प्रसंगात् । अतः परिशेषात् आनन्दवृध्यर्थत्वमेवेति । अस्मच्छास्त्रे यत्र यत्र ज्ञानस्य मोक्षसाधनत्वं उच्यते तत्र तत्र ज्ञानमिति पदेन भक्तिरीर्यते । कुतः संबंधात् ।

ज्ञानस्य भक्तिभागत्वात् । माहात्म्यज्ञानस्नेहसमुदायो हि भक्ति-रीत्युक्तम् । ततो ज्ञानं भक्तेर्भागे एकदेशः । तथाचैकदेशैकत्व-लक्षणात्संबंधादित्युक्तं भवति । एकदेशेनैकदेशित्वरित्यभिधीयते लक्षणा च दशामात्रं दत्तमित्यादौ प्रसिद्धैव । यद्यदा ज्ञानस्यैव विशेषः स्नेहादिसाहित्यलक्षणो धर्मो भवति तदा स पिंडो भक्ति-रित्यभिधीयते । यद्वा ज्ञानस्नेहश्च भक्तेरंशौ तत्रैकेनांशेनां-शांतरस्योपलक्षणम् । तथाच जहल्लक्षणया भक्तिरेव सिध्यतीति । एकदेशांतरेणैकदेशांतरस्योपलक्षणे दृष्टांतः । (६०५ । ३) यथा ज्ञानस्य परोक्षत्वापरोक्षत्वलक्षणौ द्वौ धर्मौ । तत्र तमेवं विद्वानिति परोक्षज्ञानस्य मोक्षसाधनत्वेऽभिहिते परोक्षत्वेनापरोक्षत्वं लक्ष्यत इत्यर्थः । तथाच अत्रापि अतः पुरुषार्थोऽतः शब्दात् इति लाक्षणिकः । इयं च रूढलक्षणा इति न, प्रयोजनाकांक्षालक्षणा—भिप्रायेणैव प्रवृत्ता । तरिशोकं आत्मवित् इत्यादिश्रुतिषु प्रायिक-व्यवहारदर्शनात् । यत्र भक्तिज्ञानेसहोच्येते, तदा पुनरुक्ति—प्रसंगात् भक्तिपदं स्वार्थैकदेशत्यागेन स्नेहांशस्य लक्षकम् । न तु मुख्यार्थनिष्टं । ज्ञानपदं चानुपपत्त्यभावात् मुख्यार्थमेव न तु लक्षकमिति भावः । ( ६०६ । २ ) न द्वेशतो मुक्तिः । यद्भ-गवतः एव जीवानां मुक्तिः । सा च प्रसन्नादेव । प्रसादश्च भक्त्यैव । भक्तिश्च गुणज्ञानादेव इत्येवं श्रुत्याद्यास्तद्गुणान् वदन्ति इति । तथाच कथं द्वेशतो मुक्तंगीकारे न महातात्पर्यविरोधः । भक्तेर्मोक्षसाधनत्वमनेन गम्यते । ततो मोक्षार्थं प्रवृत्तो वेदादिः गुणानेव प्रतिपादयन् मोक्षस्य भक्तिमात्रसाध्यत्वं अभिप्रैतीति

गम्यत इति भावः । ननु द्वेषात् चैद्यादयो नृपाः इत्यादिवाक्यानां का गतिः । उच्यते च एतेषां वाक्यानां मुमुक्षुणा भगवान् सदा स्मर्तव्यः इत्यभिप्रायः । यथा वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् । इत्यत्र नाकार्यकरणे तात्पर्यम् । किन्तु सर्वथा भर्तव्यत्वे तथाहापीति । गुणानाहेति तात्पर्यांतरम् । चैद्यादीनां द्वेषतो मुक्ति प्रतिपादयद्वाक्यं भगवतः कृपालुत्वादीन् गुणानाहेति । शापादिना द्वेषिणोऽपि चैद्याद्यास्तात्कालिकद्वेषमनिरूप्य पूर्वतनीं भक्तिमेवापेक्ष्य भगवतामोचिताः । अहो कृपालुत्वं निर्विकारत्वं सत्यसंकल्पत्वं च तस्येत्यत्र तात्पर्यं तेषां वाक्यानामित्यर्थः । यथा पिता क्रुद्धः पुत्रं म्रियस्व इत्युक्ते तद्वचनस्य तत्र तात्पर्याभावः । किंतु स्वाक्तकरणे । तद्वदत्रापि । इय च व्यञ्जनवृत्तिरिति केचित् । तात्पर्यवृत्तिरित्यपरे । वाक्यलक्षणानुमानं चेत्याचार्याः । सर्वेषां ( ६०७ । ५ ) शास्त्राणामनन्यथार्थतया यदेकार्थप्रतिपादकत्वं कथमयं तद्रूपमित्यर्थः । महातात्पर्यशब्दार्थ इत्यत आह । वाचकत्वं हीति । तत्परं प्रतिपाद्यं यस्य तत्परम् । तस्य भावः तात्पर्यम् । इति वाचकत्वं प्रतिपादकत्वं हि तात्पर्यमुच्यते । भगवत्प्रसादादेव मोक्ष इति तावन्निष्टंकितम् । भगवत्प्रसादो भगवद्द्वेषसाध्यो न भवति भगवत्प्रसादत्वात् । यो यत्प्रसादो नासौ तद्द्वेषसाध्यः यथा गुरुप्रसादः । यद्वा भगवद्द्वेषो भगवत्प्रसादसाधनं न भवति भगवद्द्वेषत्वात् । यो यद्द्वेषः सतत्प्रसादसाधनं न भवति । ( ६०८ । १ ) यथा गुरुद्वेषः । अथवा

भगवान् स्वद्वेषिणि न प्रसीदति, प्रेक्षावत्पुरुषत्वात् । देवदत्तवत् । यद्वाभगवद्द्वेषो भगवत्प्रीतिविषयो न भवति, भगवद्द्वेषत्वात् । यो यद्वेषी नासौ तत्प्रीतिविषयः । यथा सम्प्रतिपन्नः इति द्वेषस्य प्रसादसाधनत्वेपास्ते मुक्तिसाधनत्वमेवापास्तं भवति । तथा भगवत्प्रसादो भगवद्भक्तिसाध्यः भगवत्प्रसादत्वात् । यो यत्प्रसादः असौ तद्भक्तिसाध्यो यथा गुरुप्रसादः । यद्वा भगवद्भक्तिर्भगवत्प्रसादसाधनं, भगवद्भक्तित्वात् । अथवा, भगवान् स्वभक्ते प्रसीदति प्रेक्षावत्पुरुषत्वात् संमतवत् । यद्वा भगवद्भक्तो भगवत्प्रीतिविषयो भगवद्भक्तत्वात् । ( ६०८ । १८ ) विमतो भगवद्भक्त भक्तिमान्भवेद्भगवद्भक्त्या पुरुषार्थभाक्त्वात् । योयद्भक्त्या पुरुषार्थभागसौ तद्भक्तभक्तो दृष्टो यथा संमतः । यश्च यद्भक्तभक्तो न भवति नासौ तद्भक्त्या पुरुषार्थभाक् यथा संमत इति । ननु दैत्यादयो ब्रह्मादिषु भक्तिमन्तोऽपि तद्भक्तेष्विन्द्रादिषु भक्तिरहिता दृश्यन्ते । ततो व्यभिचारः इत्यत आह । दैत्यानां तत्र पूर्णभक्त्यभावात् । अत एव ब्रह्मादिभिः दीयमानं वरं सत्यमेव मृषा भवति न । ( ६०९ । ३ ) ईश्वरः स्वप्रीत्यनुसारेण स्वभक्तेषु भक्तिमत्सु प्रसीदति । प्रेक्षावत्पुरुषत्वाद्राजवदिति । [अनु.] तस्मात्पूज्याश्च नम्याश्च ध्येयाश्च परितो हरिम् । हरिद्वेषो न शुभदः सद्वेषत्वाद्यथा गुरोः । इति विशेषव्याप्तिर्दर्शिता । भागवतभक्तिर्भगवत्प्रीतिकारणं भगवत्प्रियभक्तित्वादिति । भगवान् रमादिषु तारतम्यभक्त्यैव प्रसीदति, तारतम्येनैव तद्विषयप्रीतिमत्वादिति च । (६१२।३) ज्ञानदाता ज्ञान-

वस्तुफलादप्यधिकदानफलवान् । पुरुषार्थहेतुवस्तुदातृत्वात् गोदातृवत् । 'य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः' ।

॥ इति तृतीयोऽध्यायः ॥

श्रीमत्सुधानुसारेण शक्तितो शोधनं कृतम् ।
रंगनाथेन बालेन प्रीत्यै माधवमध्वयोः ॥

(अनु.) व्यावहारिकभेदश्चेत्कःसावव्यावहारिकः । व्यावहारिकमित्येव वचनं व्यावहारिकम् । उत नेति विकल्पे तु; यदि स्याद्व्यावहारिकम् । तस्यापि बाध्यता चेत्स्यात् भेदः स्यात् पारमार्थिकः ।। अव्यावहारिकत्वं चेद्भेदोऽयं सत्यतां गतः । ( ६१८ । ७ ) जीवेश्वरभेदो भ्रान्तिसिद्धः इति वदन्वादी प्रष्टव्यः । किमयमेव भेदो भ्रांतिसिद्धः, किंवा भेदमात्रमिति । नाद्यः । अपसिद्धान्तात् । द्वितीये भ्रांतेरभ्रांतिपूर्वकत्वात् । जीवेशभेदस्य भ्रांतिकल्पितत्वे क्वचित् सत्यो भेदोऽङ्गीकर्तव्यः क्वासौ न क्वापि । तौ जीवेशभेदारोपोऽपि न संभवतीति । स्यादेतत् । नास्त्येव कोऽपि भेदः सत्यः तथापि जीवेशभ्रांतिरुपपद्यते । भ्रांतिर्हि संसारमपेक्षते । संस्कारश्च ज्ञानमात्रम् । अतः पूर्वपूर्वभ्रमसंस्कारादुत्तरोत्तरभ्रांत्युत्पादः । अनादिश्चायं संसारः इति । मैवम् । भेदमात्रस्य मिथ्यात्वे प्रमिते खलु तद्बलादेषा कल्पना उपपद्यते । न चैवम् । किंच सर्वोऽपि भेदो भ्रांत इति हि प्रतिज्ञैव तावद्व्याहता । सर्वोऽपि भेदो भ्रांतिकल्पित इति वाक्यार्थो भ्रांतिकल्पितः अथ परमार्थः इति प्रश्नार्थः ।

( ६१८ । १५ ) सर्वोपि भेदो भ्रांतिकल्पित इति वाक्यार्थोयं बाध्यो न वेति । द्वितीये कल्पितत्वायोगः । आद्ये सर्वोऽपि भेदो भ्रांतः इति वाक्यार्थस्य भ्रांतत्वे बाध्यत्वे च सकलोऽपि भेदः पारमार्थिकः स्यात् । न द्वितीयः । सत्यत्वापातात् । ततश्च पदार्थानां परस्परं वाक्यार्थाद्ब्रह्मणश्च भेदः सतावत्सत्यतां गतः । सर्वोपि भेदो भ्रांत इति वाक्यार्थस्य भ्रांतत्वे बाध्यत्वे च सर्वस्यापि भेदस्य सत्यता स्यादित्युक्तम् । तदुपपादनाय व्याप्तिं आह । द्वयोरेव एकस्यासत्यत्वे अन्यस्य सत्यतापरिहारात् । असत्यं न भवति इत्युक्ते सत्यस्य सिद्धेः ।

(अनु.) उत्कर्षाद्ब्रह्मताध्याने यदि स्यात्फलमंजसा ।
ब्रह्मणो नीचता ज्ञानादनर्थः किं न जायते ।

अचेतनस्य ब्रह्मत्वध्याने तुष्टिर्न हि क्वचित् ।
नीचस्य स्वात्मता ज्ञानात्कुप्यति ब्रह्मलोकवत् ॥

चंडालो नृप इत्युक्ते नृपश्चंडाल इत्यपि ।
को विशेषः परिज्ञाते नृपेण स्यात्कथंचन ॥

तस्माद्यथोक्तमार्गेण ब्रह्मोपास्यं मुमुक्षुभिः ॥

॥ इति चतुर्थाध्याये प्रथमः पादः ॥

(अनु.) एवं परेत्य भगवंतमनुप्रतिष्ठा
ये योगिनो जितमरुन्मनसो विरागाः ।
तेनैव साकममृतं पुरुषं पुराणं
ब्रह्म प्रधानमुपयान्त्यगताभिमानाः ॥
भगवंतमनुप्राप्ता अपि तु ब्रह्मणा सह ।
परमं मोक्षमायांति लिङ्गभङ्गेन योगिनः ॥
प्राप्ता अपि परं देवं सहैव ब्रह्मणः पुनः ।
आनंदव्यक्तिमायान्ति पूर्णां लिङ्गस्य भङ्गतः ।

भगवन्तं वैकुण्ठादिस्थम् ।

'भेजे खगेंद्रध्वजपादमूलम्' इत्युक्तेऽपि ब्रह्मणा सहैव लिङ्गभङ्गः । मुक्तानां च तदन्येषां समुद्रतरलोपमा । अग्नि-ज्वालावदेवस्यात्सृतिगानां दशो भवः । तदन्येषां ब्रह्मणोऽन्येषां 'कादाचित्कविशेषस्तु नैव तेषां विरुध्यते' । इति हि उक्तम् । ( ६२६ । १४ ) अग्निज्वालायामग्नेरिव संसारिणां दशोंतःकर-णाद्भवदुत्पत्तिरेव स्यान्न तु व्यक्तिमात्रम् । विमतो देहपंजरान्मुक्तो नियमेन ऊर्ध्वगतिमान् पंजरान्मुक्तत्वात् । पंजरमुक्तखगवत् । अत्रोत्तरम् । विप्रतिपन्ना गतिः, दुःखेता, चेतनाश्रितगतित्वात् । देवदत्तगतिवत् । गतेः दुःखेतत्वं नाम स्वसमानकालीनदुःखेन सह एकाधिकरणत्वम् । ततश्च देवदत्तो दुःखेन विनाऽपि गच्छतीति न व्यभिचारश्चोदनीयः । देवदत्तस्य कदापि निर्दुःख-तायाः अनंगीकारात् । आध्यात्मिकादिष्वन्यतमेन महताल्पेन

वाऽयं खलु सदा संवलितः । अनूर्ध्वगतित्वं उपाधिरिति चेन्न । प्रतिपक्षस्य न उपाधेः दूषणत्वात् । उपाधिर्हि प्रतिपक्षोन्नायकः । नेतरथा दूषणम् । ततः प्रतिपक्षस्योपाधिमुद्भावयता प्रतिपक्ष एवोद्भावितो भवति । प्रतिपक्षश्च साधनाय प्रवृत्तः, प्रतिबध्नाति । न पुनः किंचित् साधयति । ततः प्रथमेनैव प्रतिबद्धत्वात् । अतः प्रतिपक्षस्य प्रतिपक्षेऽकिंचित्करत्वान्न दूषणम् । अतएव उपाधिरपीति । अस्तु च उपाधिः प्रतिपक्षस्य । न चासावत्रास्ति । ( ६२७ । १५ ) किमयं केवलसाध्यव्यापकोऽभिमतः, किंवा साधनावच्छिन्नसाध्यव्यापकः । नाद्यः, अधर्मे साध्यसद्भावेऽप्यनूर्ध्वताविशिष्टगतित्वस्याभावेन साध्याव्यापकत्वात् । न द्वितीयः; दूरोर्ध्वगमने दुःखे तद्वदस्य साधयितुं शक्यत्वेन साध्याव्यापक-त्वात् । विमतं दूरोर्ध्वगमनं दुःखोपेतं दूरोर्ध्वगमनत्वात् पारा-वातगमनवत् । माभूदयमुपाधिः शरीरवृत्तित्वं तु भविष्यति । देवदत्तगतौ यःदुखेतत्वं तत्र न गतित्वं प्रयोजकम्; किं नाम शरीरवृत्तित्वम् । न चेदं साध्याव्यापकम् । यद्दुःखेतं तच्छ-रीरवृत्तीत्यस्य व्यभिचारादर्शनादित्यतः । गतित्वहेतोः शरी-रवृत्तित्वं पक्षेऽपि साधयितुं शक्यत्वात्, साधनव्यापकत्वं उपाधेः सर्वोपाधिसाधारणदूषणमाह । प्रतिसाधनेति । ( ६२८ । ४ ) मुक्तानां गतिः पक्षीकरणीया । तस्याः दुःखेतत्वसाधने भवताम-पसिद्धान्तः स्यात्, भवद्भिरपि मुक्तानां निर्दुःखत्वस्याभ्युपगत-त्वात् । तथा या गतिः सा दुःखेतेति व्याप्तिं वदता ईश्वरस्यापि दुःखमंगीकरणीयम् । अन्यथा तत्र व्यभिचारापत्तेः । ततश्चाप-

सिद्धान्त एव । यदि वेदादिनिरपेक्षस्त्वमेव अनुमिमीषे, तदैवमपि कस्मान्नानुमिनुया इति प्रसंगो ह्यस्माभिरुक्तः । (६२९।१२) एतेन मुक्तानां सर्वतोर्ध्वगतिः सिद्धाचेद्धाधोन्यथाश्रयासिद्धिरित्यपि परास्तम् । परसिद्धाश्रये प्रतिपक्षस्य प्रसंजनात् । अत्र लोकाकाशसंबंधित्वमेवोपाधिः । साध्यव्यापकत्वात् । या गतिः सा लोकाकाशसंबंधिनीति सोऽप्युपाधिः साधनमनुगच्छति व्याप्नोति । मुक्तगतावुपाधेरभावान्नेति चेन्न । तत्रापि गतित्वेन तत्साधनात् । ज्ञानात्कर्मक्षयान्मोक्षो भवेद्देहाख्यपंजरात् । पञ्जरोन्मुक्तखगवद् लोकाकाशगोचरः । नित्यमूर्ध्वं व्रजत्येव पुद्गलो हस्तपादवान् ।

॥ इति जैनमोक्षः ॥

बौद्धमतं चतुर्विधं । एकलमद्वितीयं शून्यमेव तत्वमित्येकं मतम् । विज्ञानमेव तत्वमित्यपरम् । अस्तेवं ज्ञानव्यतिरिक्तमपि किंतु तदनुमेयमिति तत्वं सौत्रातिकमतं तु अन्यः । अनुमेयंहि सत्वं ज्ञानव्यतिरिक्तमपि यस्मिश्च तथोक्त प्रत्यक्षप्रप्रमाणकस्तोति वैभाषिकमतम् । (अनु.) ( ६३१।४ ) निर्विशेषत्वतो नैव विशेषो ब्रह्मशून्ययोः । ननु अतत्वावेदकत्वाविशेषेऽपि यस्य विजयोत्रह्मज्ञानात्प्रागेवबाध्यते तदप्रामाणम् । यस्य तु वेदादेर्विषयो ब्रह्मज्ञानेनैव बाध्यस्तदतत्वावेदकं प्रमाणमिति विभागो मायिना उच्यते चेत् । तत्रोत्तरम् । ( ६३१।१५ ) किमिदं लोकवृत्तमनुसृत्य उच्यते किंवा स्वसंकेतमात्रेण ।

नाद्यः । आगमस्य वेदस्य कुतोल्पेन कालेनानिवर्त्यत्वाद्योमहा- न्मोहस्तत्प्रदत्वतः । अल्पकालेन अनिवर्त्य महामोह जनक- त्वात् । न द्वितीयः । आकाशनैल्यज्ञानस्य च चंद्रप्रादेशतामतेश्च प्रामाण्यं स्यात् । अल्पकालेन अबाध्यत्वात् [ ६३२ १५ ] प्रदीपस्येव निर्वाणं विमोक्षस्तस्य भाविनइत्यात्मविनाशो शून्य- वादिना मोक्षे उक्तः तंदूषयति । आत्मेति तस्य दूषणम् । आत्माभावे कस्य मोक्षः । स्वनाशार्थे च को यतेत् । आत्मना- शेऽनिष्टनिवृत्तिर्भवति इति चेत् । कुतो नेष्टस्य निवृत्तिः । सर्वा- निष्टनिवृत्तिलक्षणो मोक्षः पुरुषार्थः इति चेत् । सर्वेष्टनिवृत्ति- लक्षणे मोक्षेऽनर्थः स्यात् । इष्टविरोधिन्यनिष्टनिवृत्तिरेव पुरुषार्थः आत्मनाशे सति अनिष्टनिवृत्तेः कथं पुरुषार्थत्वम् । आत्मनः सर्वतोपि इष्टतमत्वात् । किंच घटशून्यतैव मुक्तिः स्यात् । न चा- त्मशून्यतेति नियमः शून्ये विशेषाभावात् । कल्पिविशेषेणै- व व्यवहारात् । ननु ( ६३४।७ ) निर्विशेषाशून्यतां मोक्षन्व- क्ष्महे । घट शून्यता तु सविशेषाघटेनाविशेषित्वात् । इति चेत् । न । विवक्षिताया शून्यताया शून्यताया एवमेवात्मशू- न्यतेत्यात्मना विशेशितत्वे न । सविशेषत्वदर्शनादमोक्ष- प्रसंगात् । अथैवमात्यशून्यता पुरुषार्थो दुःखानिवृत्युपयोगित्वात् शरीरादिशून्यतावत् इत्यनुमानमेव वक्तव्यम् । विमतः शून्य- भावो आत्मभावो वा न मोक्षः अदेहत्वादिति । यथा घटशून्यता । अत्र ह । मायी नेदं प्रत्यनुमाननानम् । अशरीरं वा व संतं न प्रियाप्रिये स्पृशतः । इति श्रुत्या विदेहावस्थैव मोक्ष इति

श्रुतिसद्भावेनकालातीतत्वात् । मोक्षे शरीराभावो नाम प्राकृतशरीराराहित्यमेव । न तु सर्वथाप्यदेहत्वम् । अन्यथा मोक्षे जक्षन् क्रीडन् रममाण इति भोगाभिधानासंभवात् । ( ६३५ । ५ ) तच्छून्यत्वं ब्रह्मत्वं वा मोक्षो न भवति, निर्दुःखत्वात् घटशून्यत्ववत् । विमतो मोक्षः दुःखात्मास्यात्, दुःखप्रतियोगिकभेदरहितत्वात् प्रसिद्धदुःखवत् दुःखादिभिन्नत्वात् प्रतिपन्नं जीवभावं विहायाद्वितीयविज्ञानत्वापत्तिमोक्षः इति विज्ञानवादिन्याप्यंगीकृतत्वात् । अतो युक्त एवातिदेश इति । अनुमानांतरमपि मोक्षकालोऽद्वितीयज्ञानत्वान्न भवति कालत्वात् । वर्तमानकालवत् । ज्ञानातिरिक्तस्य कल्पितत्वाद्वर्तमानकालोऽपि केवलज्ञानीति चेन्न । मुक्तिसंसारयोरविशेषत्वापत्तेः । यस्तु विशेषोऽङ्गीक्रियते तदभाव एतानेन साध्यते । ज्ञानव्यतिरिक्तं किमपि नास्तीति मते कालोऽपि नास्त्येव अतः किमाश्रयानुमानप्रवृत्तिरित्यत आह ।

[अनु.] यदि कालोऽपि नेत्याह कदेति प्रश्न उत्तरम् ।

किं वक्ष्यति यदाऽवस्थां वदेत्सा पक्षतां व्रजेत् ॥

आह विज्ञानवादी तदा कदा कालो नेतिप्रश्ने परेणकृते सति किमुत्तरमसौ वक्ष्यति । निरधिकरणस्याभावस्य निरूपयितुमशक्यत्वात् । मोक्षावस्थायां कालो नेत्युत्तरं वक्ष्यामीत्याशंकयाह । यदेति । यदावस्था पक्षीक्रियते तदावस्थात्वादित्येव हि हेतुरुच्यते । न कालत्वादित्यतो नोक्तदोषः । ज्ञानवती, अवस्थात्वात् । संसारावस्थावत् । किंच मोक्षावस्थां कालाभाव–

स्याधिकरणत्वेन वदता कदेति सा मोक्षावस्था कदेति केनचित्पृष्टे भावनापरिपाकोत्तरकाल इत्यवस्थाधिकरणत्वेन काल एव वक्तव्यः । तथाच कथं तस्याभावः । ननु प्रतियोग्यधिकरणमेव ह्यभावस्याधिकरणम् । न च कालस्य कालोऽधिकरणं, येन तदभावः कालाधिकरणः स्यात् । अतः कदेति प्रश्न एवानुपपन्नः । किमुत्तरेणेति चेत् । एवं तर्हि कालविशेषमधिकरणत्वेनानुपादाय कालं निषेधता सामान्यनिषेध एव कृतः स्यात् । ( ६३६ । २१ ) कालो नेति सामान्यतः निषेधे क्रियमाणे हि कालस्य स्वरूपमेव निषिद्धं स्यात् । तथाच कालं गच्छति विषयीकरोतीति कालगा-प्रमासाक्षी विरुणद्धि । ( ६३७ । ५ ) अद्वितीयस्य शून्यस्य ब्रह्मणो वाऽवस्थानं मुक्तिरिति तावदेकजीववादिभ्यां ताभ्या मभिधीयते । तत्र वयं ब्रूमः । कालसद्भावान्नाद्वैतत्वमुपपद्यते इति । तत्र परः कालोऽपि नास्तीति वदति तदा साक्षिविरोधोऽभि-धीयते । साक्षीहि पूर्वोत्तरकोटिरहिततया कालं गृण्णाति ।

( अनु. ) विमतः प्रपंचवान् कालः कालत्वात् प्रतिपन्न-वत् । यद्यदनुविद्धं प्रतीयते तत्तत्रारोपितम् । यथेदमाकारे रजतम् । कालानुविद्धं च समस्तं प्रतिभाति । तस्मात्तत्रैवारोपितम् । स एव तु परमार्थः । अतस्तन्मात्रावस्थानं मुक्तिरिति कालै-कत्ववादिनः । एवमेव शब्दैकत्ववादिनो वैय्याकरणाः प्राहुः । शैवैकदेशिनस्तु स्वागममाश्रित्येश्वरैकत्वमाहुः । एतेषां च पक्षस्ता-वत्समान एव । प्रतिपन्नस्वरूपजीवविनाशादेः सर्वैरभ्युपगतत्वात् । अतः परमेष्टनाशेनापुरुषार्थत्वमित्यादिदोषोपि समान एवेति ।

( ६३७ । १७ ) वैभाषिक सौत्रांतिकाभिमतं मोक्षं निरूपयति । ज्ञानमेवात्मा । तच्च ज्ञानं स्वभावेनैव भंगुरम् । अत एव क्षणिकम् । तत्संतानस्तु नित्यः । तस्यानादिवासनावशात् यो विषयोपरागस्योत्पादः स संसारः । भावनाप्रकर्षवशेन वासनायामुत्सन्नायां यो विषयोपप्लवं विना शुद्धस्यैवोदयः स मोक्षः इत्युभय समानम् । सौत्रांतिकास्तु संसारे साकारत्वं मुक्तौ निराकारत्वं च विशेषमाहुः । तत्रोत्तरं विमतः कालः न निर्विषयैतज्ज्ञानसंततिमान्, कालत्वात् । इदानींतनकालवत् । मोक्षो निर्विषयः चित्संतानसंबंधो न भवति । कालसंबंधित्वात् । संसारवत् । ( ६४० । १७ ) न प्रेत्य संज्ञास्तीत्यपि श्रुतिरस्य मुक्तस्यामुक्तज्ञेयता नास्तीत्येव वक्ति । न तु मुक्तो न जानातीति । प्रेत्य प्रयाणांतरं संज्ञाज्ञानं नास्तीति तावच्छ्रौतोऽर्थः । तत्र प्रकरणवशात्प्रत्येतत्येतन्मरणविशेषमोक्षानंतरं इति व्याख्येयम् । ज्ञानं तु मुक्तिसंबंधि प्रतिषिध्यमानं तत्कर्तृकमेवेति कल्पनेन नियामकं पश्यामः । अतस्तत्कर्मकस्यैव ज्ञानस्यायं प्रतिषेधो विज्ञायते । अमुक्तानामप्यस्मदादीनामपरोक्षज्ञानस्यायं प्रतिषेधः कुतः एतत् व्याख्यानम् । 'अनुच्छित्तयो धर्माः यस्यासौ अनुच्छित्तिधर्मा' इत्युत्तरश्रुतेः । न विद्यते उच्छित्तिर्येषां ते तथोक्ताः । अनुच्छित्तयो धर्माः यस्यासौ अनुच्छित्तिधर्मेति । ( ६४१ । १ ) विज्ञानघन एव एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्यसंज्ञास्तीति । विज्ञानमूर्तिरयमात्मानादिरपि चरमे जन्मन्येतेभ्यो भूतेभ्यः समुत्थाय भूतात्मकशरीरोत्पत्तिनिमित्तमेवोत्पन्न-

व्यवहारविषयो भूत्वा पुनस्तानि भूतान्येव तन्नाशनिमित्तमेव नित्योपि विनश्यति । विनष्टव्यवहारगोचरो भवति । अपवृज्यते इति यावत् । ततः प्रेत्य मोहानन्तरं अस्य मुक्तस्य ज्ञानहानिं आशंक्य मैत्रेय्या आह 'अत्रैव मा भवान् मोहान्तमपिपदि'ति वाक्येन भवान्मां प्रति यदाह । 'मुक्तो न जानाति इति' तन्मोहकमेव इत्यर्थं उक्तवत्या चोदितः याज्ञवल्क्य आह । 'न वा अरे अहं मोहं ब्रवीमि ज्ञानोपदेशाय प्रवृत्तोऽहं परमप्रियायै ते मोहं न वदामि' इति प्रतिज्ञां उक्त्वा कथमित्याशंकायां आह, 'अविनाशी वाऽरेऽयमात्मा अनुच्छित्तिधर्मा' इति । ज्ञानविनाशवचनं मोहकमित्याक्षेपे स्वरूपनाशोऽसंगतः कथमुक्तः इत्यत आह, 'ज्ञानरूपस्यविज्ञाननाशस्तन्नाश एव यत्' । ज्ञानरूपस्तावदात्मा तस्य च आत्मनाशो नाम तन्नाश एव । न चात्मनाशोऽस्ति । तथा सति मुक्तेरपुरुषार्थत्वप्रसंगात् । अतो न ज्ञाननाशोऽस्ति । अत एव न मद्वचनं तदर्थं किंत्वमुक्तानां मुक्तविषये संज्ञा नास्ति। मुक्तानामेव वा वृत्तिरूपा संज्ञा नास्तीत्यादिरेव मद्वचनार्थः इत्यभिप्रायवान् । स्वरूपानाशमूचिवान् । एवमुत्तरे दत्ते शून्यः मतनिरासोऽपि भवतीति चोक्तवान् । (६४१।२२) ये तार्किकाः स्वरूपानाशं अंगीकृत्य सुखादिधर्मागीकुर्वन्ति तन्निरासार्थं आह । 'अनुच्छित्तिधर्मेति । अतो न पौनरुक्त्यदोषः । मात्रासंसर्गः तस्य भवतीति माध्यंदिनश्रुतिः । (६४२।६) यत्र हि द्वैतमिव भवतीत्यादिरुत्तराश्रुति इतरं पश्यति; यत्र यदि द्वैतं भवति तर्ह्येवेतरं इतरं पश्यतीत्यादिना व्याप्तिमभिधाय हि शब्देन तस्याः

प्रमितत्वं च उक्त्वा यत्र यदि त्वस्यात्मनोऽपेक्षितं सर्वमात्मैवाभूत्स्वव्यतिरिक्तं न स्यात्। तर्हि केन साधनेन कमर्थं पश्येत्। न केनापि किंचिदित्यनिष्टप्रसंगोभिधीयते। भवेदेवमर्थापत्त्या विषयाभोगाभावनिंदावगमो यद्यत्राद्वैतमते विषयभोगाभावप्रसंजनीयः स्यात्। न चैवम्। अपि तर्हि वस्तुस्थितिकथनमेतत्। तथाहि अयमात्माऽविनाशी अत एवानुच्छित्तिस्तस्य धर्मः। मुक्तौ मात्राभिरसंमर्गस्तस्य भवति। कुतः। यत्र हि संसारे द्वैतमिव भवति; तत्रेतरं इतरं पश्यतीत्यादि। यत्र तु मुक्तावस्य सर्वमात्मैवाभूत्स्वव्यतिरिक्तं किमपि नास्ति तत्र केन कं पश्यन्न केनापि न किमपि। इति चेत्। न। येनेदमखिलं वेद तं च केन विजानीयाद्विज्ञातारं च केन विजानीयादित्यनेन येनेदं सर्वं विजानाति तं च केन विज्ञातारमरे केन विजानीयादिति वाक्यद्वयमुपादत्ते। तत्सहचर्यात्केन कं पश्येदित्यादिकमपि प्रसंजनमेव न वस्तुस्थितिकथनमिति ज्ञातव्यमिति। (६४२।१९) द्वैतस्यास्वातन्त्र्यमभिप्रेत्य द्वैतमिवेत्युक्तम्। न तु द्वैताभावमभिप्रेत्य कुतः क्वचिदभिधानादावित्र शब्दस्याभावद्योतितानुवर्तेरित्यर्थः अस्वातंत्र्यं चात्र स्वरूपमात्रमुक्तं इव शब्दस्याभावार्थत्वे द्वैतमिव भवतीत्यस्य द्वैतं नास्तीत्यर्थः स्यात्। यत्रत्वस्य सर्वमात्मैवाभूदित्यस्य च तावद्द्वैताभावोऽर्थः स्फुट एव। ततश्च वाक्ययोरविशेषः। (अनु.) स्वातंत्र्योपमाभेदभेदेष्विव उदीरितः। अभेदभेदेति प्रतियोगिद्वयोपलक्षणम्। इवीतर एकस्मिन्नुक्ते तत्प्रतियोगीद्वितीयोऽपिलभ्यत इत्यर्थः। ननु यथा गौरिव

गवयः इत्युक्ते गवयस्य गोत्वाभावोऽवगम्यते, एवं द्वैताभावोऽर्थ सिद्धः इति चेत् । तर्हि द्वैतसदृशं कल्पितं द्वैतमेवेति तस्य सत्ता-भावेन भवतीत्यनुपपत्तिः । भवन्मतस्यापि काल्पनिकत्वे यदि द्वैतदर्शनं स्यात् तथा चेतरेतरं पश्यतीत्येतदपि तदेवेति न हेतुहेतु मद्भावोत्र । कल्पत इति । ( ६४४ / ३ ) न प्रेत्यसंज्ञास्तीति वाक्यं श्रुत्वा मैत्रेय्याक्तं अत्रैव मा भगवान् इत्यादि । ततः प्रज्ञानघन इत्यात्मनो ज्ञानस्वरूपत्वमभिधायेदानीं ज्ञानाभावं वदतः तव वाक्यं मोहकमित्यभिप्रायोकल्प्यः । अपुरुषार्थत्व प्रसंगश्च । अन्यथा व्याख्याने मैत्रेय्योक्तं निरुत्तरं प्रसज्येत । न ह्येतैर्वाक्यैः स्ववचनव्याघातः परिहृतेनापि पुरुषार्थतासमर्थितेति । (अनु.) ( ६४४ । १२ ) यद्यर्थो दुःखहानिः स्यादनर्थः सुखनाशनम् । तयोश्च दुःखहानाद्धि सुखनाशोऽधिको भवेत् । प्राप्यापि दुःखं सुमहत् सुखलेशाप्तये जनः । यतते सुखहानौ हि को मोक्षाय यतते पुमान् । विमतो दुःखयुगेव चेतनत्वे मति सुखोत्कृष्टत्वा त् । यथा नारकी । ( ६४५ । २३ ) अनेन सोनानंदाद्विमुक्तः आनंदादीर्भवतीति श्रुतिमुपादत्ते । यत्रानंदाश्च मोदाश्च मुदः प्रमुद आसते । निर्गुणे ब्रह्मणि मयि धारयन्विशदं मनः । पर-मानंदमाप्नोति यत्र कामोवसीयते । न विष्णुसदृशं दैवं न मोक्ष-सदृशं सुखम् । न वेदसदृशं वाक्यं न वर्णोत्कारसंमितः । मुक्तस्य शरीराभावोऽप्यसिद्धः । (अनु.) न वर्तते यत्र रजस्तमस्तयोः सत्वं चेत्यादेः । श्यामाच्छदेत्यादेश्च । तयोः रजस्तमसोर्मिश्रं सह चरितं सत्वं च । कामान्नी कामरूप्यनुसंचरन् । ऋचांत्वपोष-

मास्ते । मुक्ताः शरीरोपेताः आत्मत्वात् संमतवत् । मुक्तिः देहिनिष्ठा जीवत्वस्थात्वात् संसारवत् । अनेन सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चितेति श्रुतिमुपादत्ते । एतमानन्दमयमात्मानमुपसंक्रम्य । परं ज्योतिरुपसंपद्य । विमतः कालः जीवपरमात्मैक्ययुतो न भवति । कालत्वात् संसारकालवत् । जीवन्मुक्तो परमात्मा न भवेत्, पूर्वं ततो भिन्नत्वात् । यत्पूर्वं यतो भिन्नं तत्पश्चादपि तदैक्यं नाप्नोति । यथा घटः पटेन । न जीवेश्वरौ भिन्नाभिन्नौ चेतनत्वात् । देवदत्तयज्ञवत् । इत्थमुक्तप्रकारेण जैनादिमतानि भ्रमजानि । तस्माद्धेयानीति शेषः । यथायोग्यं वारुणीं सौपर्णीं वा समाविश्य तत्पतिं तया प्राप्य तत्प्रसादाद्धरौ लयं यान्तीति संक्षेपः । (६४९ । ८) अत्र द्वौ मार्गौ । शेषमार्गो गरुडमार्गश्च । तत्र शेषमार्गमादावाह सोमस्त्विति । वरुणस्य सोमे । तस्य अनिरुद्धे । तस्य कामे । तस्य वारुण्याम् । तस्याः शेषे । तस्य वाण्याम् । तस्याः वायौ । वायुरिति ब्रह्मा । इदानीं गरुडमार्गमाह । अग्नेः सूर्ये लयः । तस्य गुरौ । तस्य शक्रे । तस्य सुपर्णपत्न्याम् । तस्याः सुपर्णे । तस्य वाण्याम् । तस्याः स्वपतौ ।

(अनु) भृग्वादयो दक्षमवाप्य तेन प्राप्योंद्रमेतेन सुपर्णपत्नीम् । ये मनवो वैवस्वताद्याः ये च राजमुख्याः प्रियव्रताद्यास्ते स्वायंभुवमनुं प्रविश्य तेन इंद्रं प्रविशंति । आकाश ऊर्वीच गुरुं प्रविश्य तेनैव यातः पुरुहूतदेवम् । सनत्कु—

मारव्यतिरिक्तास्त्रयः कामं विशंति । सनत्कुमारस्तु काम एव शिष्टा उक्तेभ्यः । देवाःअग्नौ । कामस्यतु वारुण्यामुक्तएवा-लयः। वर्णाश्रमाचाररताः मनुष्याः धर्मं प्रविशन्ति । सोऽपि-स्वायंभुवमनुम् । सर्वेपितरस्तं धर्ममेव संयांति। सर्वे सुरानु-गामनुगंधर्वाद्याः कुबेरं । स च सोमनमेति । ( अनु ) विमुक्ति काले प्रविशन्त्यभीक्ष्णं भोगांश्च तद्देहगताः प्रभुंजते । आनंद सुव्यक्तिरमुत्र तेषां भवत्यतश्चेष्टत एव निर्गताः । क्रीडंति भूयश्च ममाविशंति तानेव सायुज्यमिदं वदंति । सायुज्यहीनास्तु लये-तु सर्वे प्रोक्तेन मार्गेण विशंति सृष्टौ । बहिश्च निर्यान्ति ततो न्यदापि सयुज्यभाजां भवति प्रवेशः । सायुज्यहिना स्तुलये तु सर्वे प्रोक्तेन मार्गेण विशंतिसृष्टौ । बहिश्च निर्यान्तिततोन्य-दापि सायुज्यभाजां भवति प्रवेशः । प्रलये वायुः तेजो-भिधां श्रियमाप्य तत्र लीनोभूत्वा तयैव विष्णुमाप्तः । सृष्टि-काले जातेग्रे सर्वेभ्यः पूर्वंततोविष्णोः पुत्रतया हिरण्यगर्भ-त्वेन प्रसूतः । ( अनु : सर्वेपि ते मुक्तगणाअमंदस्वाद्रं निजानं-दमशेषतोऽपि भुजंत एवासत ईशदेहे लयेथ सर्गे बहिं-रेवयांति । प्रयाति धर्मं निर्ऋतिस्तु शक्रं मरुद्गणाः पारिषदा-स्तथैव । सर्वेऽनिरुद्धं पृतनाधिपाद्यास्तुरश्रुतिर्हार्थमियं विमुक्तिः विश्वक्सेनाद्याःपार्षदाः । सर्वे पृतनाधिपाद्याः विष्वक्सेनाद्या सर्वे भगवतः पर्षदाः अनिरुद्धं प्रयांति ।

॥ इति चतुर्थाध्याये द्वितीयः पादः ॥

पीनस्तनीभूतचतुस्सुशास्त्रो
श्रीसत्यनाथाभिधकामधेनुः ।
चतुस्तनैरेव पुमर्थदोग्ध्री
ज्ञानाभिधं क्षीरमसौ प्रदुह्यात् ॥ १ ॥

यस्माध्ध्याभिनवामृतं विबुधसंतृप्तिप्रदं साध्वभूत्
यस्यासीत्परतत्वबोधिकतरा शुद्धा न वा चंद्रिका ।
यस्याभूदभिनूत्नतांडवमलं दुस्तर्कसंकृंतनम्
तं दुर्वादिभयं पयोधिमुडुपं श्रीसत्यनाथं श्रये ॥ २ ॥

सत्याभिनवसच्चन्द्रो यस्मादभिनवामृतम् ।
प्रादुर्बभूव तं सत्यनाथामृतनिधिं भजे ॥ ३ ॥

पातु श्रीसत्यनाथेंदुः श्रितो विष्णुपदं सदा ।
कृन्तति स्वांतसंतापं यस्याभिनवचंद्रिका ॥ ४ ॥

कृष्णप्रसादाद्दुस्तर्कसर्पभेदे हि केकिवत् ।
सत्यनाथं तमीडे यश्चक्रेऽभिनवतांडवम् ॥ ५ ॥

सत्यस्वरूपस्य हरेरनाम्नो विचिंतया शंह्यभवद्विचित्रम् ।
तस्मात्स सत्योपपदं त्वधीशपदं वदंतीति जना गुरुक्तम् ॥६॥

अवधानिकुलोत्पन्नभीमाचार्येण सूरिणा ।
श्रीशतुष्टयै विलिखितं वाग्वज्रस्य तु पुस्तकम् ॥ ७ ॥

संपूर्णं । श्रीसत्यनाथगुर्वंतर्गतश्रीवेदव्यासात्मक-
श्रीकृष्णार्पणमस्तु ॥

प्रीत्यै माधवमध्वयोः ।

करकृतमपराधं क्षन्तुमर्हन्तु सन्तः ।

श्रीश्रीपादराजगुरुसार्वभौमैः विरचितः वाग्वज्रनामो ग्रन्थः
अवधानी भीमाचार्येण संगृह्य लिखितः ।
इदं पुस्तकं सिद्धार्थी आश्विन शुक्ल दशम्यां मध्वजयन्त्यां मुळबागलु
हे. कृ. रंगनाथाचार्येण मुद्रणालयाधिकारिणा यथाशक्ति संशोध्य
राजगोपालेति उपनामयुजा श्रीश्रीपादराजगुर्वनुग्रहाकांक्षिणा
मुळबागलस्थ भीमसेनरायसूनुना रघूत्तममुद्रणालयाधिपतिना
रा. भी. मध्वेशेन स्वीयमुद्रणालये मुद्रयित्वा प्रकटीकृतं
श्री श तु ष्ट ये ।